# विजयतां स्वातन्त्र्यलक्ष्मीः । विजयतां संस्कृतम् ।

१५ ऑगस्ट ! स्वातन्त्र्यदिनोत्सवः । वयम् अद्य स्वतन्त्राः । आङ्ग्लसाम्राज्यम् अपसार्य पूजिता स्वातन्त्र्यलक्ष्मीः । अनुभूयते राजकीयं स्वातंन्त्र्यम् । प्रयत्यते भृशं सामाजिक-समता-संपादनार्थम् । परम् 'अन्न'-विषय सर्वात्मना परतन्त्रम् एव स्वतन्त्रं भारतम् । इदं लज्जास्पदम् । इदं हास्यास्पदम् । इदं स्वातन्त्र्यविनाशकरम् । परराष्ट्रेभ्यः गोधूमादिभिक्षायाचनं यातु सत्वरं समाप्तताम् । वरं मरणम् अन्नं विना । न पुनः विक्रयः स्वातन्त्र्यस्य, स्वत्वस्य च ।

अन्न-परतन्त्रता सत्वरं समाप्ततां नेतव्या । तदर्थं सर्वैः निरलसैः कृषिसेवापरैः भवितव्यम् । शाक-फलादीनां निर्माणे यतितव्यम् । अन्नस्य धान्यस्य वा दुरुपयोगः यत्नेन परिहर्तव्यः । अन्नब्रह्म समुपासनीयं संवर्धनीयम् । दुग्धान्न-समृद्धयर्थं गोवंशः संरक्षणीयः । धर्मक्षेत्रे भारते गोमाता भयमुक्ता सर्वविभवदात्री यथा भवेत् तथा वर्तितव्यम् ।

स्वतन्त्रे भारते संस्कृतं राष्ट्रभाषापदे मूर्धाभिषिक्तं यथा भवेत् तथा प्रयतनीयं सर्वात्मना संस्कृतसमाजेन । स्वीयाः पत्रव्यवहाराः सन्तु वाग्व्यवहाराः वा भवन्तु संस्कृतमाध्यमेन एव व्यवहर्तव्यम् । संस्कृतसाहितीसेवकैः सारस्वतैः नवनवोन्मेषशालिनीं प्रज्ञां साक्षात्कारयितुं संस्कृत-वाङ्मयागारे 'नवीन'-निर्माणे प्रयतितव्यम् । विध्वंसनीयः भ्रमः केषांचन वावदूकानां 'गतं संस्कृतं, मृतं संस्कृतं, पुराणं संस्कृतम्' इति । तदर्थं संस्कृतस्य पुराण-मात्र-परतन्त्रता समाप्ततां नेतव्या ।

अद्य स्वातन्त्र्यदिने प्रकाश्यते 'शारदा'-कारैः 'मुक्तक-मञ्जूषा' । मञ्जूषाम् उद्घाट्य सूक्ष्मेक्षिकया रसिकैः साक्षात्कृताः चेत् तेषां मुक्तकानां मौक्तिकत्वं स्फुटीभविष्यति । १५ ऑगस्ट-दिने 'शारदा-गौरव-ग्रन्थमालायां पञ्चदशपुष्पत्वेन अयं मौक्तिकहारः कविवर्य श्री. बहुलीकर महोदयानां सौजन्येन सौहार्देन च समुपलब्धः इति अहो भाग्यं मन्यामहे संस्कृत–विश्वस्य । मुक्ताहारेण अनेन स्वतन्त्रभारते पुष्टं भवतु नवीनं संस्कृतं तुष्टं च अस्तु संस्कृतं जगत् इति प्रार्थयामहे ।

विजयतां स्वातन्त्र्यलक्ष्मीः । विजयतां संस्कृतम् ।

शारदा

१ भाद्रपद १८८९

ऑगस्ट १९६७

पुणें) महाराष्ट्रराज्यशासन-भारतकेन्द्रशासन-पुरस्कृता विश्वप्रिया (मुम्बई

सौर १ भाद्रपद १८८९

# शारदा

संपादकः वसन्त अ. गाडगीळ.

वर्षम् ८ अङ्कौ १९-२०

वार्षिकमूल्यम् रू. ५ * अस्य अङ्कस्य रू. ०-२५

## नमः शान्ताय तेजसे।

गुरुवर्याः विद्यावाचस्पति- पं. कवीश्वर-दत्तात्रेयशास्त्रिणः नचिरम् एव काञ्ची-कामकोटी-पीठ-जगद्गुरु-'श्री-'चरणैः यावज्जीवं पञ्चशतरूप्यक-वर्षासनेन अनुगृहीताः इति मङ्गलां वार्तां पठित्वा प्रमोदतेतमां 'शारदा'-कुलम्।



पं. दत्तात्रयशास्त्री कवीश्वर

संचरिष्णु-वेदान्तत्वेन भारत-वर्षे विश्रुत-कीर्तिसौरभाः पं. कवीश्वर-गुरु-चरणाः अ. भा. संस्कृत- साहित्य- संमेलनेन स्वीये कलकत्ताधिवेशने १९६१ संवत्सरे 'विद्यावाचस्पति-' पद-बहुमानेन संमानिताः इति जानन्ति एव सर्वे।

नचिरमेव तेषां षष्टयब्दपूर्ति-मङ्गलनिमित्तकः कश्चन अनितरसाधारणः दिव्य-भव्यः महोत्सवः संयोजयिष्यते 'शारदा'परिवारेण।

साभिनन्दनं सविनयादरं च तेषां विषये एतावदेव निवेदयामः —

**नमः शान्ताय तेजसे।**

# परीक्षेयं पिशाचिका

(टिळक महाराष्ट्र विद्यापीठ-संस्कृत विविध स्पर्धायां संस्कृत-व्याख्यानम्)

परीक्षकमहोदयाः,वन्दनीया आचार्याः, मत्प्रियविद्यार्थिमित्राणि च। अद्य अहं 'परीक्षेयं पिशाचिका' इति विषयम् उद्दिश्य किञ्चिद् वक्तुमिच्छामि। सावधानं शृणुत।

परीक्षां प्रथमं वन्दे ततो वन्दे परीक्षकान्।
तत्कृपां याचमानोऽहं साम्प्रतं वक्तुमुत्सहे॥

'दुर्जनं प्रथमं वन्दे' इति उच्यते। यतः दुर्जनः अतीव पीडयति लोकान्। किन्तु वरं दुर्जनः न परीक्षा। कथमेतत्? अहो, सूर्यप्रकाशवत् सुस्पष्टमेतत् इति मन्ये। यतः दुर्जनः न सर्वान् पीडयति। परीक्षा तु बाल्यात् प्रभृति सर्वान् पीडयति। सर्वोऽपि बालः शालां प्रविष्टमात्र एव परीक्षाभिभूतः। प्रतिदिनं परीक्षाप्रायाः गृहपाठाः भयम् उत्पादयन्ति तस्य चेतसि।

गृहपाठेभ्यः मुक्ता विद्यार्थिनः साप्ताहिकीनां मासिकीनां वा परीक्षाणां मुखेषु निपतन्ति। वार्षिकी परीक्षा तु सर्वासां परीक्षाणां सम्राज्ञी। प्रतिवर्षं प्रथमदिनादारभ्य अन्तिमदिनपर्यन्तम् एषा परीक्षा-सम्राज्ञी विद्यार्थिनां चेतांसि आक्रम्य तान् भाययति पीडयति च। एषा खलु महापिशाचिका इत्यहं मन्ये।

मत्सदृशाः मन्दमतयः अनया महापिशाचिकया अन्याभिः सामान्य-परीक्षापिशाचिकाभिश्च बलवत् पीडिताः। एतासां स्मरणमात्रेण न मे रोचते स्नानं न विलेपनं न शयनं नापि क्रीडा। यदा च परीक्षासमये अहम् उत्तराणि लिखितुं प्रारभे तदा ब्राह्मणशापात् मरणसमये सर्वाणि अस्त्राणि विस्मरन् कर्णः इव अहमपि सर्वम् अधीतं विस्मरामि। किंकर्तव्यमूढश्च चिन्तयामि। परीक्षामनुत्तीर्णः अहं किं करोमीति। अनेन विचारेण भयाकुलस्य मे मुखं शुष्यति। लेखनी स्रंसते हस्तात्। त्वक्च परिदह्यते, वेपथुश्च शरीरे मे जायते। अर्जुनवत् भ्रान्तोऽहं तस्मिन् परीक्षागृहे निश्चलः तिष्ठामि। अचिरात् एव तद् परीक्षागृहं परितः भ्राम्यति। मन्मस्तके चक्रं भ्रमतीव। अन्ततः सर्वेषां गात्राणाम् अप्रभुः अहं भूमौ पतामि। तदा निरीक्षकमहाशयाः माम् उत्थाप्य जलं च पाययित्वा पृच्छन्ति, 'रे बाल, अपि संज्ञां प्रतिपन्नोसि? किं ते मूर्च्छा-कारणम्?' इति।

अयि सभ्याः, सत्यं कल्पितात् अद्भुततरम् इति उच्यते। किन्तु सत्यम् अतीव भयावहम् इति मे प्रत्ययः।अतः असत्यम् अवलम्ब्य निरीक्षक-महाशयान् प्रत्युत्तरं करोमि, 'त्रिचतुराणि दिनानि ज्वरेण पीडितोऽहं दुर्बलः संजातः। तस्य अयं परिपाकः' इति। अयि श्रोतारः, एवं प्रति-संवत्सरं मां प्राणसंकटे पातयन्त्याः परीक्षापिशाचिकायाः मुखात् कथं कथमपि विमुक्तोऽहम् अधुना दशम्यां श्रेण्याम् अध्ययनं करोमि। न जाने आगामिनि संवत्सरे शालान्तपरीक्षासमय कीदृशी मे अवस्था भविष्यति। न जाने च को मे त्राता भविष्यति।

शालान्तपरीक्षा तु महापरीक्षाणाम् आद्या। बह्व्यः विविधाः परीक्षाः एनां परीक्षाम् अनुसरन्ति, विद्यार्थिनां च रक्तशोषणं कुर्वन्ति। ताश्च अनुत्तीर्य पदात्पदमपि गन्तुं न शक्यते जीवनप्रवासे। परीक्षासु संपादितं यशः जनम् उन्नतिं प्रापयति। तेन यशसा विना परमेश्वर-स्यापि माहात्म्यं न कोऽपि विजानीयात्। 'अहं ज्ञानस्वरूपः परमेश्वरः किं मे परीक्षया' इति यदि परमेश्वरः स्वयं ब्रूयात्, तर्हि न कोऽपि तद्वचने विश्वस्यात्।

परीक्षापिशाचिकायाः एनं प्रभावं दृष्ट्वा मत्सदृशानां मन्दमतीनां जीवनं निष्फलं खलु इति मन्ये। चाणक्यस्य आज्ञया वधस्तम्भं नीयमानः चन्दनदासः स्वपुत्रं प्रोक्तवान्, 'वत्स, गच्छ तं देशं यत्र चाणक्यस्य नामापि न श्रूयते' इति। तद्वचनं स्मारं स्मारम् अहं चिन्तयामि, 'अपि वर्तते कोऽपि देशः अस्मिन् भूतले, यत्र परीक्षायाः नामापि न श्रूयते' इति। अहो, महद्भाग्यं तेषां विद्यार्थिनां ये परीक्षाविहीने देशे वसन्ति।

परीक्षा देवता, न पिशाचिका इत्यपि वदन्ति केचित्। ते सर्वे कुशाग्रबुद्धयः उद्योगिनश्च। अतः लीलया ते परीक्षार्णवम् उत्तरन्ति। एषा परीक्षापिशाचिका तेषाम् अधीना इति दृश्यते। सर्वदा सा उज्ज्वल-यशसा तान् विभूषयति। किन्तु एते परीक्षास्वामिनः अतीव विरलाः। केवलम् अपवादभूताः ते। तेन परीक्षा पिशाचिका इत्येव नियमः सिध्यति। अतोऽहं ब्रवीमि--

सदा वक्रा सदा क्रूरा सदा पीडाकरी खलु।  
छात्रमार्गे स्थिता नित्यं परीक्षेयं पिशाचिका॥

नू. म. वि. हायस्कूल पुणें २.

-देव शरद विनायक

# शारदा–गौरव–ग्रन्थमाला

| पुष्पम् | लेखकः | मूल्यम् |
|---|---|---|
| १. श्रीराजेन्द्रप्रसादचरितम् | — पं. वासुदेवशास्त्री लाटकर | ३.०० |
| २. वात्सल्यरसायनम् | — प्रा. श्री. भा. वर्णेकर | १.०० |
| ३. शिक्षैषा सात्त्विकी सताम् | — प्रा. रं. रा. देशपाण्डे | २.०० |
| ४. श्रीरामकृष्णपरमहंसीयम् | — प्रा. श्री. भा. वर्णेकर | १.२५ |
| ५. बालकानां जवाहरः | — पं. विघ्नहरि देव | ०.४० |
| ६. श्रीमान् विन्स्टनः चर्चिलः | — पं. औदुम्बरकर शास्त्री | ०.६४ |
| ७. अप्पाशास्त्री : साहित्यसमीक्षा | — प्रा. अशोक अकलूजकर | २.०० |
| ८. श्रीशिवराज्योदयमहाकाव्यम् | — प्रा. श्री. भा. वर्णेकर | ( क्रमशः ) |
| ९. 'समानमस्तु वो मनः' | — डॉ. ग. बा. पळसुले | ३.०० |
| १०. मराठी–संस्कृत-शब्दकोषः | — जोशी-परांजपे-गाडगीळ | (क्रमशः) |
| ११. भूपो भिषक्त्वं गतः । | — पं. ग. पां. लोण्ढेशास्त्री | १.०० |
| १२. विनायक-वीर-गाथा | — डॉ. ग. बा. पळसुले | ३.०० |
| १३. आङ्ग्ललघुकाव्यानुवादमाला | — पं. ल. ज. खरे | २.०० |
| १४. श्रीराजयोगभाष्यम् | — डॉ. चिं. त्र्यं. केङ्घे | ५.०० |

पत्रव्यवहारस्थानम्

'शारदा' – कार्यालयः पुण्यपत्तनम् २

# मसूरिका-महा-ताण्डवम्

अधुना मसूरिका-व्याधि-ग्रस्तानां रुग्णाः कतिचित् शतानि सन्ति। कति विरूपाः कति अन्धाः कति बधिराः अभवन्। कति पञ्चत्वम् अपि गताः। एष भयंकरो व्याधिः न तु अतिप्राचीनः। आयुर्वेद-शास्त्रस्य योगरत्नाकर-नाम-ग्रन्थे अस्य कारणं, चिकित्सा, पथ्यापथ्यं सविस्तरं लिखितम्। योगरत्नाकरः चतुः-शत-वर्षपुरातनः। अतः चतुःशत-वर्षेभ्यः प्राग् एष व्याधिः भारतीयानां ज्ञातः आसीत्। तस्य चिकित्साऽपि।

एष जनपदविध्वंसको व्याधिः ( एपिडेमिक ) प्रदुष्ट-पवनोदकैः प्रखरतर-चण्डांशु-किरणैर्जायते। दुष्ट-निष्पाव-शाकाद्यैः तलभर्जित-कट्वम्ल-लवणैरतिमात्रोपयुक्तैः जायते। दुष्ट-पवनोदक-चण्डांशु-किरणानाम् अपरिहार्यत्वात् एष व्याधिः अतीव दुश्चिकित्स्यः।

अस्य उत्पत्तेः पूर्वं तीव्रः ज्वरः, कण्डूः सर्वसंधिशूलः, भ्रमः, त्वचः ताम्राभत्वं, नेत्रयोः शोथः जायते। त्रिदिनानन्तरं मुखादारभ्य क्रमशः आपादं मसूराकृतयः कदाचित् निष्पावाकाराः मध्ये निम्नाः स्फोटाः उत्पद्यन्ते। कासः शुष्कः अतीव तीव्रो विद्यते। कण्ठे शूक इव तुदति। नासिकायां स्फोटः उत्पद्यते। तेन श्वासावरोधो भवति। रुग्णः मुखेन श्वसिति। जलाकाङ्क्षा तीव्रतरा भवति। कदाचित् मलावरोधो मूत्रावरोधो वा भवति। तीव्रज्वरेण रुग्णः असंबद्धं प्रलपते। सप्तदिनानन्तरं स्फोटाः श्यामवर्णाः चिपिटाः भवन्ति ततः शुष्यन्ति व्रणकवचानि स्वयं स्खलन्ति। रुग्णस्य दर्शनं तु भयावहम्। कदाचित् नेत्रव्रणः दृष्टिनाशः जायते। व्रणकवचं तु अतीव व्याधिकरम्। अतः तत् दूरं नीत्वा अग्निना दहेत्। ततः अपि द्वित्रिसप्ताहपर्यन्तं न कस्यापि सहवासं सान्निध्यं वा भजेत्। ततोऽपि तीव्र- सूर्यकिरणानि, आयासं, देशाटनम् अजीर्णं त्यजेत्। त्यजेत् आबललाभाच्च व्यायाम-स्नान- मैथुनम्।

अस्य अनुत्पत्त्यै प्रतिकारार्थं च आयुर्वेदोक्तं हरिद्रादिचूर्णं शीतलेन जलेन सह अद्यात्। एतत् चूर्णं सांगली-नगरपालिकायाः आयुर्वेद-चिकित्सालये विनामूल्यं दीयते। एतत् अवश्यम् उपयोक्तव्यम् तस्य परिणामश्च सर्वैः नः निवेदनीयः इति विज्ञप्तिः।

सांगली-नगरपालिकायाः मसूरिका-रुग्णालयं नगराद् बहिः रहसि विद्यते। तत्र अद्ययावत् २० रुग्णाः आयुर्वेदोक्त-चिकित्सया स्वस्थाः अभवन्। एषा योगरत्नाकरोक्त-चिकित्सा अत्युपयुक्ता सुलभा स्वल्पव्यया च। परिपाठादिक्वाथः प्रतिदिनं क्वाथयित्वा अपर्युषितः दीयते।

गण्डूषार्थं यष्टिमधुघन-क्वाथः। नस्यार्थं शोधन-तैलम्। कण्ठशोधनार्थं कण्ठशोधकः। सर्वाङ्गावधूलनार्थं (डस्टिङ्ग) निम्बपत्रचूर्णं तथा वन्योपल-भस्म दीयते। भक्षणार्थं लाजाः भक्षितुमसमर्थाय लाजमण्डो वा दीयते।

लाजास्तृट्-छर्द्यतीसार-दाह-मोह-कफ-च्छिदः।

कासचित्तोपशमनाः दीपना लघवो हिमाः। अनेन मसूरिकारुग्णस्य उपद्रवाः, लक्षणानि शाम्यन्ति। तथा च सायं हिङ्गु-लशुनादि धूपश्च दीयते। अनेन धूपनेन रुग्णाः प्रसन्नचित्ताः भवन्ति।

आयुर्वेदीयचिकित्सा उपयुक्ता, सुलभा, स्वदेशीया अतः अनुकरणीया स्यात् इति विज्ञप्तिः।

नगरपालिका
साङ्गली

वैद्य वसन्त कुलकर्णी

## प्रशंसनीयं प्राथम्यम्।

वटपत्तनम्। प्राच्यविद्यामन्दिरस्य रामाणविभागे संशोधनकार्यं कृतवतां विद्वद्वर्याणां श्री. या. वि. देवासकरमहोदयानां कन्यका कुमारी ऊर्मिला संस्कृतं प्रधानतया भाषाशास्त्रं च (लिङ्ग्विस्टिक्स) गौणतयादाय श्रीमहाराजसयाजिरावविश्वविद्यालयस्य, १९६७ मार्चमासि सम्पन्नायाम् एम्. ए, परीक्षायां प्रथमश्रेण्यां प्राथम्येन समुत्तीर्णा। तया विश्वविद्यालयजर्मनभाषाप्रशिक्षणवर्गेषु जर्मनभाषायाः पाठ्यक्रमं यशस्वितया परिसमाप्य तद्विषयकं प्रावीण्यपत्रं (डिप्लोमा) अपि प्रथमाङ्केन समुत्तीर्य समधिगतम्। एतादृगत्यन्तोज्ज्वलयशःसम्पादनार्थं स्वकुलदीपिकाया ऊर्मिलायाः सानन्दं हार्दम् अभिनन्दनम्।

# अप्रबुद्धः सतां श्रेष्ठो हन्त हन्त दिवंगतः ।

श्रूयन्ते खलु भूयांसि सुभाषितानि सज्जनप्रशंसापराणि । परं कः ईदृशः सज्जन इति मृगयमाणो यद्यपि रामेश्वरात् काश्मीरपर्यन्तं पदयात्रां कुर्यात् मन्ये न स यथार्थनामभाज सज्जनं गवेषयितुं पारयेत् । इदं तु परमभाग्यं केषांचन मादृशां वराकाणां, तथा च पुण्यविश्वविद्यालयस्थ-टिळकाध्यासनाधिष्ठित - श्रीमद् डॉ. दि. के. गर्दे महोदयसदृशानां कतिपयानां विदुषां यत्तैः कृतः साक्षात्कारः सज्जनस्वरूपस्य श्रीमदप्रबुद्धमहोदयानां सहवासेन, तन्मुखनिःसृत - वचनामृत - श्रवणेन च ।



ब्रह्मीभूताः पू. अप्रबुद्धाः

बाला बालिकास्तरुणास्तरुण्यो वृद्धाः श्रीमन्तः दरिद्राः पण्डिता अपण्डिताः संसार-सुख-संतुष्टाः संसारतापसंतप्ताश्च सर्वेषां समानम् एकं शरणं खलु श्रीमदप्रबुद्धमहोदयाः । तैर्हि खलु स्वार्थं हुत्वा परेषां कल्याणाय सन्ततं स्वदेहं टङ्कैरिव परितक्ष्य प्रयतमानैः सकलं स्वीयम् आयुर्भारतीयसंस्कृतिरक्षणायैव समर्पितम् । तेषां हि गुरवः पुण्यपत्तन-स्थानां सर्वेषां सुविदिताः श्रीमदण्णासाहेब पटवर्धनमहोदयाः । बी. ए. परीक्षां एल्. एल् बी. परिक्षार्धं च समुत्तीर्य तैः सकलं लौकिकस्वार्थं विहाय कृतं श्रीमदण्णासाहेब पटवर्धनानां साहचर्यं सेवाभावेन । तत्र यत्तैः सन्ततं पीतं महर्षिश्रीमदण्णासाहेब-वदन-चन्द्रमसो निःसृतं तेन समुपचितान्तरङ्गैस्तैस्तादृगेव ज्ञानामृतं वचनौघैश्चामरणं वितीर्य संतर्पिताः सर्वे जन्तवो, ये हि भाग्यवन्तस्तान् समुपासर्पन् को धर्मः का संस्कृतिः किं चातुर्वर्ण्यं, किं नाम रहस्यं व्रतादीनां, किं मलतत्त्वं संस्काराणां, के वेदा नाम, किं नाम वेदानाम् अपौरुषेयत्वं, किं योगशास्त्रं, कीदृशं सर्वेषामद्यतनानां विज्ञान-रसायनादिशास्त्राणाम् अगतिकत्वं, कथं वा योगादिशास्त्राणां दृढमूलत्वं किं गीताया रहस्यं, किं पुराणानां महत्त्वं, तथा चाधुनिक-राजकीयपक्षेषु के वा प्रामाणिकाः, केषां शास्त्रनिष्ठत्वं, आधुनिकलेख-केषु केषां तर्कशुद्धा तर्कदुष्टा वा सरणिः, आधुनिक-नाटक-चित्रपटेष्वपि के गुणा अवगुणा वा इति कति कति विषयान् लीलया विशदीकृत्य सर्वेषां जिज्ञासूनां बालानाम् अपि सकलानि संदेहस्थानानि तैर्निरस्यन्ते स्म ।

श्रीमदण्णासाहेब पटवर्धनमहोदयानाम् आदेशादेव तैः पुरातन-मुनिवत् गौरीगुरोः परिसरे पर्णकुटीं विरचय्य तपःसाधनम् अपि कृतम् आसीत्। अतः सकलम् एव तेषां ज्ञानम् अनुभूतिपूतत्वात् पूर्णतया निःसंदेहम् आसीत्।

श्रीमदण्णासाहेब पटवर्धन चरित्रम्, वैदिक संस्कृतीची पुनर्घटना, ऋग्वेदाचा सन्देश, वेदांचें अपौरुषेयत्व, दोन साम्यवाद, भारतीय विवाह-शास्त्र, सायन्स ऑफ योग, ब्राह्मण, शिक्षणाचा खेळखंडोबा, मार्क्सिझम् एक्स-रेड् इत्यादयस्तेषां ग्रन्था अद्यापि तेषां सकलविषयहृदयगामिनीं तेजस्विनीं धिषणां प्रकटयन्ति।

स्वार्थगन्धशून्यैस्तैः कृता उपकारा अद्यापि स्मर्यन्ते महाविद्यालय-स्थैर्बालैः मार्गभ्रंशाद् रक्षितैस्तरुणैः शीलभ्रंशान्निवारिताभिस्तरुणीभिः पीएच्. डी. प्रबन्धेषु समधिगतनानाविधसाहाय्यैः पण्डितैः, संसारगत-नानाविधक्लेशान्मोचितैः सांसारिकैः, अशास्त्रीय-पथ-निवृत्ति-पूर्वकं सत्पथे प्रवर्तितैश्च भूयोभिः साधकैः।

दिवं गतेषु तेषु खलु धन्या स्वर्गभूमिः नितराम् अभागिनी चेयं भारतभूमिः। परं श्रुतं मया तेषामेव भाषणेषु यत् सन्तः कदापि स्वर्ग-सुखे नैव रमन्ते पुनरपि लोकोपकाराय निवर्तन्त एव धरणीतलम्। अत एवं संप्रत्यपि क्वचन पुण्यभूमावस्यां तैर्गृहीत एवावतारः स्यादिति द्रढीयसी मे श्रद्धा।

न्यू इंग्लिश स्कूल
टिळक-मार्गः पुण्यपत्तनम् ९
पं. न. ना. भिडे

शारदा - गौरव - ग्रन्थमाला...क्र. १५

# मुक्तक–मञ्जूषा

दि. द. बहुलीकर



लोकमान्य-पुण्यदिनम्
१ ऑगस्ट १९६७

मूल्यम् रूप्यकद्वयम्

## कृतज्ञाः स्मः ।

डॉ. पळसुलेमहाभागैः लिखितायाः प्रस्तावनायाः पठनानन्तरम् अन्यत् किमपि प्रस्तावनारूपेण पठितुं न उत्सहेरन् रसिकाः । अतः अत्र केवलं कृतज्ञता प्रकटीक्रियते ।

डॉ. पळसुलेमहोदयैः कार्यान्तरमग्नैरपि काव्यमिदं पठित्वा प्रस्तावनारूपेण स्वमनोगतं प्रकटीकृतम् । सर्वथा उपकृताः स्मः डॉ. पळसुलेमहाभागैः । तथा च, प्रा. अर्जुनवाडकरमहोदयैः महत्या सूक्ष्मेक्षिकया रसिकतया च परीक्षिता इयं मञ्जूषा, दोषापनयनाय च दर्शितः पन्थाः तेषामानृण्यं गन्तुं न वयं क्षमाः ।

आधुनिके काले संस्कृतस्य प्रकाशकाः शर्करेव सुदुर्लभाः । संस्कृतभाषाप्रचारार्थं बद्धपरिकराः केचन एव पं. गाडगीळसदृक्षाः महाभागाः । तैरेव च प्रकाश्यते इयं मुक्तक-मञ्जूषा, उपहारीक्रियते च रसिकेभ्यः । हार्दान् धन्यवादान् अर्हन्ति पं. गाडगीळमहोदयाः ।

'लोकमान्य'-पुण्यदिनम् — सौदामिनी बहुलीकर
१ ऑगस्ट १९६७

# प्रस्तावना

यदा काव्यसंग्रहोऽयं पठनार्थं गृहीतः, तदा चिन्तितम् आसीत्-त्रिचतुराभिर् होराभिः एतं समापयिष्यामि इति। अन्यदेव तु अनुभूतम्। अपेक्षितस्य षड्गुणोऽपि कालः न पर्याप्तोऽभवत्। न ह्येताः ओष्ठ-व्यापारमात्रेण अभ्यन्तरीकरणीयाः द्राक्षाः। चर्वणैकरस्यानि पृथुकानि (भाषायां 'दडपे पोहे' इति ख्यातानि) खल्वेतानि। यावन्तीं अधिका चर्वणा, तावान् अधिको रसास्वादः।

एतेषां मुक्तकानां प्रायः द्विविधा प्रेरणा दृश्यते। एकतः पौराणिक्यः कथाः; अपरतश्च नैसर्गिकाणि दृश्यानि। सीतारामयोश् चरितम्, वामनेन बलिनियमनम्, परशुरामपराभवः, अप्सरसा मुनिमोहनम्, ध्रुवकथा, गङ्गावतरणम् इत्याद्याः पौराणिककथा एकतः; अवर्षन्ती पात्रापात्राविचारेण वा वर्षन्ती मेघमाला, पिप्पलस्य चलपत्रता, अवश्यायावृतः पन्थाः, सूर्याचन्द्रमसोर् ग्रहणम्, मरुच्छिन्ना मेघाः, परभृताः, सूर्यस्य परागतिः इत्यादीनि च निसर्गदृश्यानि अन्यतः। एते उभये स्फूर्तिबिन्दवः कस्मिन्नपि शुभकाले अस्य कवेः प्रातिभं शुक्तिपुटं प्रविश्य मौक्तिकभावेन परिणताः। न केवलम् अयं मुक्तककलापः, मौक्तिक-कलापोऽपि।

आधुनिकेषु संस्कृतकविषु द्वौ प्रवाहौ न्यूनाधिकतया स्पष्टौ प्रति-भासेते। एके कवयस् तावत् प्राचीनमनस्काः। यैः आकण्ठं पीताऽस्ति प्राचीना काव्यसुधा। येषां शब्दे शब्दे स्फुटति आत्मसात्कृतः प्राचीन-काव्यानां परिपाकः, शास्त्राणां च प्रौढिमा। प्राचीनकाव्येन च परि-पुष्टोऽभवत् येषां कविमनःपिण्डः। ये च अन्तरङ्गविषये वा बहिरङ्ग-विषये वा, प्राचीनकवीनाम् अनुकरणमात्रेण कृतकृत्यम् मन्यन्ते आत्मा-नम्। ये न सहन्ते ईषदपि काव्यदोषं, व्याकरणप्रमादं वा। अन्ये च नावीन्योन्मुखाः। ये प्राचीनं मानयन्तोऽपि न तावतैव परितुष्यन्ति। ये न रमन्ते परिपाट्याः आटीकने। ये तृषिता इव सन्ति नावीन्यस्य। 'क्व संस्कृतम्, क्व चान्यभाषाः?' इति च चिन्तयतां दूयते येषां चित्तम्। ये न अतीव आद्रियन्ते व्याकरणसंस्कारं, प्राचीनानाम् वा आदर्शान्। ये च नित्यं नव-नवीन-प्रयोगपराः सन्ति। एतयोर् मध्ये कतरद्-वर्ग-पातिनः कविवराः श्री. बहुलीकराः?

उपर्युपरि अवलोकयतः कविरयं जीर्णवादी इति ग्रहः नासंभवी। तथा हि। पुराणकथासु उपजीव्यत्वेन अस्य पक्षपातः। प्राचीनोपयुक्तेषु

वृत्तेष्वेव अस्य सविशेषः प्रेमा । सुदृढश्च तेषु अस्य अधिकारो दृश्यते । अनुष्टुब्-भारमपि असहमानानाम् अस्मादृशानां हृदये कमपि विस्मयं जनयन्ति अस्य भारहस्तस्य कवेः लीलाविलासायमानाः स्रग्धराः, सहजक्रीडितानि च शार्दूलविक्रीडितानि। किमिदं 'मेघविस्फूर्जिता' नाम इति समाधातुं पिङ्गल एव आवाहनीयः स्यात् । तत्समशब्दानां परिचयमात्रेण संस्कृतज्ञंमन्यानाम् अस्मादृशानां गर्वहरणं **दिनपरिवृढ-, उस्र-, अलंभूष्णु-, आत्मकीय-, कापिशायन-, बालेय-, परिस्तोम-, स्थविष्ठ-, कडङ्गरीय-, समज-, उद्घ-, अदसीय-, अपष्ठु-, हल्लीशक-** इत्यादीनि पदानि पदे पदे कुर्युः । 'आम्रान् पृष्टः कोविदारान् आचष्टे,' 'काकस्य कति वा दन्ताः' इत्यादीनाम् आभाणकानाम् उपादानीकरणम् कवेः पाण्डित्यं द्योतयति । **अबोधपूर्वकम्, प्रत्यादिशत्, जयोदाहरणम्,** किं ततः इत्यादयः शब्दप्रयोगाः कालिदासादीनां प्रभावं सूचयन्ति। सहकार-,पुष्पिता वाच्, मानपत्र-, पक्षिगण-, प्रतिकर्मन्-, इत्यादिशब्दगताः श्लेषाः कवेः परंपरां द्योतयन्ति । दोषैकदृशाऽपि पुरुषेण अशक्यदर्शना अत्र काव्ये संस्कारच्युतिः, छन्दोभङ्गो वा ।

न तु एतावतैव बाह्याकारदर्शनेन कविरयं परंपरैकपरवशः इति भ्रमितव्यम् । सा वञ्चना स्यात् । आगरकराणां 'सुधारक'ता यथा तेषां वेषपरिधानादिमात्रतः अतर्कणीया, तथैव बहुलीकराणां कवितापि । न हि सर्वा एव सकच्छवाससः जीर्णमताः सन्ति । भूतकाले रममाणाऽपि बहुलीकर-कविता न भूताविष्टा । सा वर्तमानेऽपि रमते । तस्य सुखदुःखाभ्यां हृष्यति खिद्यते च । नास्ति च तस्य युगधर्मेण– संशयेन अश्रद्धया च– सा सर्वथा मुक्ता । भूतपूर्वस्य रुसीय– सर्वाधिकारिणः क्रुश्चेव्हस्य आकस्मिकः अधःपातोऽत्र एकं मुक्तकं–अस्य कवेः प्रकृत्यनुसारेण एकाम् अन्योक्ति-जनयति । दुरित-बीजोत्पन्नामपि श्रीलतां प्रचुरमानपत्रैर्वृतां संपश्यन् कविः 'यथा बीजं तथाङ्कुरः इति' वचनम् अश्रद्धातुं प्रारभते । वाराणस्यां यवनभयाक्रान्तस्य विश्वेश्वरस्य जलमज्जनेन आत्मरक्षणकिंवदन्तीं श्रुत्वा, स्थिरलोचनं नन्दिनं च अपरित्यक्तनिजस्थानम् आलोक्य गुरुलाघवं विपर्यासितम् इति कवेर् भाति । लालकिल्लायां दृष्टेन तुलाचित्रेण मनसि उद्भाविता विचारा अपि अत्र श्लोकाकारतां याताः । चीन-देशीया मर्कटकथापि नात्र अनुपजीव्या । न वा वर्जनीयाः 'गुलमोहर' सदृशाः असंस्कृता अपि शब्दाः, रिक्तमूर्धसदृशी वा कल्पना। तथापि मन्ये गौणोऽयं प्रश्नः, कः कविः कतमं संप्रदायम् अनुसरति इति । कवित्वस्य यः प्राणप्रदो धर्मः, यो व्यवच्छेदको विशेषः, स वर्तते वा न वा इति इदं खलु दर्शनीयम् । विश्वरूपवतः

सत्यस्य कोऽपि विशेषोंऽशः कविना अनुभूतो वा न वा, यश्च अनुभूतः स वैचित्र्यवत्या शैल्या शब्दीकृतो वा न वा, किं कश्चित् कविः प्राचीनानां कल्पनानां जुष्टचोषणमात्रेण परितुष्यति, उत नवनवोन्मेषशालिनी तस्य प्रज्ञा, इत्येतदादिकं खलु अत्र विमर्शनार्हम्। एतया दृष्टचा च दृश्यमाने अस्य कवेः कवित्वं मुक्तके मुक्तके दृश्यते। अतिपरिचितास्वपि पुराणकथासु सः कमपि नवीनम् अर्थं पश्यति। काऽपि नवीना वा प्रतिक्रिया तन्मनसि आविर्भावं लभते। अवलोक्यताम् इदं मुक्तकं, यत्र न वामनेन कृता वञ्चना बलिं दुनोति किंतु दातुरपि भविष्यति काले संभाव्यं पात्रे दानशैथिल्यम्।

खेदो नैव बटुच्छलादपहृताशेषश्रियोऽप्यद्य मे
दुःखं त्वेतदतीव पीडयति यद् दित्सुर्जनोऽतः परम्।
गच्छेद् दानपराङ्मुखत्वमवनौ पात्रेऽपि शङ्कां वहन्
इत्युक्त्वा बलिना त्रिविक्रमपदे न्यासि स्वकीयं शिरः॥

गृहीकृतमिव अस्ति एतया कथया कविमनः। अन्यत्रापि इमां बलिनियमनकथां सोऽतीव मनोज्ञया रीत्या उपयुङ्क्ते। विश्वामित्रेण सह वामनाश्रमं प्राप्तो दाशरथिर् वामनाश्रमदर्शनेन वामनवासनावासितान्तःकरण इव क्वैतत् तृतीयं पदं क्षिपामि इति पृच्छति, सपदि च महर्षिर् विश्वामित्रः 'स्वहृदये' ब्रवीति- 'चित्तेऽस्तु तन्मे चिरम्'।

भूयो दृष्टप्रबोधपूर्वकमपि स्वप्नेषु यत्, तद् यदा
सार्धं गाधिसुतेन वामनतपःस्थानं गतो राघवः।
प्राहैवं स तदोन्मना इव 'पदं क्वैतत् तृतीयं क्षिपे
शृण्वंस्तन् मुनिरब्रवीत् स्वहृदये, 'चित्तेऽस्तु तन्मे चिरम्॥

अहो भव्यता कल्पनायाः। नितान्तं तुष्टाः स्मो वयम्। एकेनापि अनेन श्लोकेन श्री बहुलीकराः कवियशोभाजः अभविष्यन्। अयमपि अन्यतरः श्लोकः अलं कविप्रतिभायाः वैशाल्यस्य प्रदर्शनाय—

हर्म्यं कल्पितपूर्वमेत्युटजतां, प्रासादतां चोटजं,
यातस्ते च धरातलं सममुभे; तद्वीक्ष्य मन्यामहे।
कालाम्भोधितटे नु नाकशिशवः स्वच्छन्दमेतच्छलात्
कुर्वन्तः परिवर्तयन्ति सिकतादुर्गाणि भञ्जन्ति च॥

मुक्तकमिदं भर्तृहरेः सुप्रसिद्धां 'कालः काल्या भुवनफलके क्रीडति प्राणिशारैः' इति पङ्क्तिं, 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः मृत्युर्यस्योपसेचनम्...' इति भगवतीम् उपनिषदं च स्मारयति। 'मानुष्यकं मास्तु नः' 'नियतयो लोकेऽध्वगान् शासति' इत्याद्याः

अर्थान्तरन्यासाः कवेर् गाढं चिन्तनं सूचयन्ति। कियन् न्विह प्रदर्शनीयम्? सहृदयैस् तत् स्वयमेव अनुभवनीयम्।

कविर् नाम सार्वभौमः। स्वप्रतिभैक-वशंवदः सः। कस् तम् आदेष्टुं धृष्णुयात् 'एवं कुरु,' 'एवं मा कार्षीः' इति? अस्ति तु प्रार्थयितुं सर्वस्यापि अधिकारः। अतः प्रार्थ्यते। अस्ति श्री. बहुलीकरेषु कवित्व-शक्तिः। संवेदनक्षमं मनः। चिन्तनशीला प्रकृतिः। आविष्कारक्षमं भाषा-प्राभवम्। पूर्वसूरिकृतीनां सूक्ष्मोऽभ्यासः। यत्नकृता भाषासाधना। प्रयासार्जिता च शैली। सर्वथा च प्रशंसाम् अर्हति, अननुकूलेऽपि दैनंदिने वातावरणे व्रतनिष्ठया परिपालितः तेषां काव्याभ्यासः। इदमेव तु दुनोति मनः यत् न सन्ति तावन्तस् तेषां काव्यरसिकाः, यावन्तो भवितुम् अर्हन्ति। शङ्के, तेषां काव्यस्य प्रातिभासिक-काठिन्येन भीतभीताः सन्तो दूरतोऽपसरन्ति संस्कृतज्ञा अपि जनाः। ममैवानुभवोऽत्र प्रमाणम्। यदि प्रस्तावनैषा मम लेखनीया नाभविष्यत्, सर्वमिदं काव्यं मयापि अपठिष्यतैव इति न शक्यते वक्तुम्। पठनोत्तरमेव अज्ञासिषम्-पठनाभावे कियताऽहं वञ्चितोऽभविष्यम्। अन्येऽपि अपठन्तो न जानन्ति, कियत् ते मुषिताः सन्तीति। तथापि कालमहिमा अयम् मन्ये। एषु दिनेषु न केवलं सामान्यजनानाम्, अपि तु संस्कृतज्ञानामपि क्षीणाऽस्ति पाचनशक्तिः। न जीर्यतेऽस्मासु पौष्टं संस्कृतम्। अपेक्ष्यते लघुरुचिरं संस्कृतम्। बालप्रायः संस्कृत-विषये समाजः। अतः श्री. बहुलीकर महोदयाः प्रार्थ्यन्ते यत् बालानां सुखबोधाय यादृशं संस्कृतम् अनुरूपम्, तादृशमपि किंचित् किंचित् अन्तरान्तरा लेखितुं तै प्रसादः कर्तव्यः। न हि तेषाम् अयम् अविषयः।

आधुनिकस्य संस्कृत-काव्यस्य अयं विशेषः यत् विरलप्रसूति सदपि न तद् एकाङ्गिकम्। आधुनिकी संस्कृतकविता यथा कौतूहलवशात् मुक्तच्छन्दः परिचेतुम् इच्छति 'शिवराज्योदय' सदृशानि पूर्वातिशायीनि महाकाव्यान्यपि सा आदरेण संवर्धयति। इतः अञ्जलीनपि उपायनीकरोति कण्टकानां वा भवन्तु, मुक्तकानां वा। यद् यस्मै रोचते तत् तेन ग्राह्यम्। सर्वमपि इष्टमेव अस्माकम्। 'यशसे अर्थकृते' वा अभवन्त्याम् अस्यां सुरभारतीसेवायां यथाप्रकृति यथारुचि (न सन्त्यत्र सुदृशाम् अभ्यन्तरवर्णनानि, तल्पनिकटा वा तासां विस्रम्भकथाः) यथाशक्ति स्वीयं भारं निरपेक्षतया वहन्तो धन्यवादार्हाः श्री. बहुलीकर महाभागाः।

पुण्यपत्तन-विद्यापीठम् (डॉ.) ग. बा. पळसुले
पुण्यपत्तनम् ७ २६-३-६७

# " मुक्तक - मञ्जूषा । "

१ तान्यभ्यन्तरवर्णनानि सुदृशां, तेऽन्यैर्भृतास्तेऽलिनो
दीपेनेव निरीक्ष्य तल्पनिकटात् ख्याताश्च तास्ताः कथाः ।
काव्यं कान्तपदं सुधीभिरिह चेत् तादृक्षमेवोच्यते
क्वैतन्नोऽल्पधियामलं विलिखितुं कृष्णानना लेखनी ॥

२ अहर्मुखे हाटकपण्यवीथिं
दिवाप्यनर्घार्कमहोपलाभाम् ।
रात्रौ निषद्यां मणिभूषणानां
द्यौश्चित्ररूपेयमभिव्यनक्ति ॥

३ दिनपरिवृढस्योग्रैरुस्रैः शरैरिव पीडितं
बलितररिपुक्रान्तानीकोपमं धरणीतलम् ।
कलयति तरून् क्षोणीध्रांश्च क्वचिद् युधि [1]चर्मवत्
क्वचिदपि तृणं नम्रं चैतत् पुरस्कुरुतेतराम् ॥

४ चिरविलसितमद्रेर्मूर्ध्नि कादम्बिनीनाम्
अवनितलनिबद्धस्तन्निवेशश्च तस्मात् ।
स नु कविरिव कश्चिन् निर्झरौघध्वनीनां
छलत उभयकृष्टां स्वां दशां निन्दतीव ॥

५ आकुञ्चिताकेकरलोचनाभ्यां
निभालयन् काननभूमिभागान् ।
व्यवस्यतीवैष मृगाधिराजो
दृग्ग्रन्थिबद्धं नु वनं विधातुम् ॥

६ निशम्यारादङ्ग्वरे रवमपि भयव्याकुलमना
यदीयं पन्थानं परिहरति पूर्वं स्म मृगराट् ।
पराचीने दैवे त्वहह ! निखिलारण्यदलनेऽ-
प्यलम्भूष्णुर्नागः सृणिपतनमद्यैष सहते ॥

७ निशिततरनिपातैश्चण्डभानोः करौघैर्
अनिशमगतिमत्त्वादेष संपीड्यमानः ।
क्षितिगिलितरथाङ्गस्याङ्गराजस्य साम्यं
दधदिव खलु वृक्षो भाति भूबद्धमूलः ॥

---

१ चर्मन्— " फलकोऽस्त्री फलं चर्म । " इत्यमरः

८ "अहं वाचामीशः, कविसमरसिंहोऽप्यहमि "ति
ब्रुवाणांस्तान् सारस्वतविभविनो वच्मि विनयात् ।
" न किं तज्जानीध्वे यदिह खलु वक्तव्यमपरैः
स्वयं तेनोक्तेन व्रजति लघुतां गीष्पतिरपि " ।।

९ पृष्ठेऽम्भसां गुरुतरं प्रणिधाय भारं
मन्दं कथं कथमपि क्रमसेऽन्तरिक्षम् ।
नानाविधाधिभरमुद्वहतां नराणां
जीमूत, नूनमुपमानपदं च यासि ।।

सन्त्येते दिशि दिशि तेऽद्रयः सखायो
येषां त्वं विभजसि दुःखमात्मकीयम् ।
मर्त्यानामिह समधर्मदुर्लभत्वाद्
रुग्भारस्त्वनिशमुपैति वृद्धिमेव ।।

१० आक्रन्दन्ति मरुस्थलानि कतिशस्त्वत्स्निग्धदृग्लिप्सया
धावन्ति प्रसभं तवात्र तु जलान्युत्सारयत्स्वद्रिषु ।
अप्यौदार्यवतोऽम्बुवाह, भवतो ज्ञातं न मन्ये, यथा
पात्रापात्रविचारणाविरहितं दानं स्मृतं तामसम्[1] ।।

११ आमोदैर्निपतत्कुठारमुखमप्याप्याययन् सर्वतः
पाटीरस्तुलयत्यलं शिबिमपीत्याकर्णयन् पादपः ।
मन्ये, संस्तवकापिशायनवशाद् यातः परां क्षीबतां
शाखाभङ्गकृतोऽपि तन् निगदतो हास्यं ह्नुतं नेक्षते ।।

१२ यत्कूलाद् विमुखीभवन्त्यतिथयो वापीजलान्वेषिणो
यश्चौर्वानलभोज्यतां गमयति द्राग् रत्नमुक्तार्थिनः ।
तिग्मैः क्वापि करैः क्वचिन् मृदुतरैस्तं तापयंस्तोषयन्
हर्तुं वेत्ति स एक एव तरणिर्वार्धेः कदर्याद् रसम् ।।

१३ नृत्यन्तस्त्वदुरःस्थले सबडिशा आनायिनो[2] धीवरा
गृह्णन्त्यत्र निजेच्छया झषकुलं संपश्यतस्तेऽर्णव, ।
त्वत्कूलैरपि मत्स्यकण्टकचयाकीर्णैरुपालभ्यसे
प्राप्ता सागर ! यादसांपतिरिति ख्यातिस्तवान्वर्थताम् ।।

---

१ अदेशकाले यद् दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत् तामसमुदाहृतम् ।। गीता १७-२२
२ ( आनायिन :– जालवन्तः । )

१४ "प्राणेभ्योऽप्यधिकासि जह्नुतनये," "सिन्धोऽसि मे जीवनं,"
तादृक् स्थानविशेषतोऽन्यसरितां नामानि चाप्याश्रितम् ।
स्वप्रेम्णः सममेव तत् प्रतिदिशं निर्वर्तयन् नाटकं
किं शैलूषकुलाग्रणीर्जलनिधिः किं वा शठग्रामणीः ।

१५ यः साक्षाद् भवति च संयमो वपुष्मान्
यो मूर्ति श्रित इव चास्ति कर्मयोगः ।
पश्यन्ति त्वगणितवेदनेऽपि तस्मिन्
[१]बालेये प्रकृतिमृदौ जनाः खरत्वम् ॥

१६ नगेन्द्रो वर्षासूज्ज्वलतरपरिस्तोमसहितो
निदाघे प्रोच्चण्डे भवति सजरच्चीवरतनुः ।
परं स्वीयौन्नत्यात् क्षणमपि न जातु प्रविचलन्
स्वकीयामन्वर्थामचल इति संज्ञां स कुरुते ॥

१७ सन्त्वन्ये शशिभास्करप्रभृतयः कामं द्युसंचारिणो
विद्योत्यापि वियत् क्रमेण विलयं ये यान्ति कालात्ययात् ।
नित्यं केवलमेक एव गगनं त्वं त्वश्नुषे स्वेच्छया
तस्मान् मारुत, राजते खलु भवत्संज्ञा नभस्वानिति ॥

१८ महीयसः क्वापि तरून् प्रभञ्जन् प्रभञ्जनत्वं स्वमभिव्यनक्षि ।
क्षुद्रं रजोऽपि क्वचिदात्ममूर्ध्नि साटोपमारोप्य च यासि वाच्यम् ॥
तवासतां काममिह स्थविष्ठास्तादृग्विधा नाम समीर, दोषाः ।
मन्यामहे त्वां पवनं तु यस्मात् त्वया लयं पर्युषितत्वमेति ॥

१९ संशुष्कैर्घटितं तृणैरपि पुरो दृष्ट्वोद्यतं ते धनुर्
वैक्लव्येन कडङ्गरीयसमजा धावन्त्यमीतस्ततः ।
अद्धा वेत्ति न कश्चिदत्र तव [२]यच्चञ्चास्वरूपं ततो
धानुष्कोद्ध, निजाग्रहस्तलघुता साडम्बरं दर्श्यताम् ॥

२० सर्वान् प्राणभृतो निजानुसरणे याः प्रेरयन्ति स्वयं
वीक्ष्यैतान् स्खलतोऽध्वनि प्रतिपदं हृष्यन्ति याश्चान्तरे ।
दृष्ट्वाशासमधर्मतामिह दिशां तासां नु तादृग्विधाम्
आशामण्डलमित्यकारि हरितां चक्रस्य संज्ञा बुधैः ॥

---

१ बालेयो गर्दभे पुंसि मृदौ बलिहिते त्रिषु । -इति मेदिनी
२ चञ्चा तु नलनिर्माणे तृणनिर्मितपूरुषे । -इति मेदिनी

२१ भो भो नूतनमूर्तिवृन्द, भवतोत्कृत्याङ्घ्रिरषून्मूलिताः
पौराणप्रतिमा लुठन्ति धरणौ, किन्त्वेतदाकर्ण्यताम् ।
रन्ध्रार्थी पिशुनस्तवापि चरणौ मेक्षिष्ट पङ्काविला-
वित्याशु[1]प्रतिकर्मकौशलमलं सज्जीकुरुष्वाधुना ॥

२२ [2]मूर्धा रिक्तोऽपि कश्चित् सुरगुरुशिरसा तुल्यतामेति तूर्णं
कश्चिच् चञ्चात्मकोऽपि क्वचिदिह पुरुषो भाययत्याशुगेन ।
पट्टोष्णीषाद् गुरुत्वं, तृणनरयशसः कारणं चास्य वर्म
नानालीलानिधीनामिति भवति जगत्यम्बराणां विलासः ॥

२३ हनुत्वा स्वां प्रकृतिं प्रसाधनशतैराहिण्डमानानिमान्
व्याघ्रादीन् मृगपृष्ठतोऽनुपदिनस्तेषां च ताँल्लुब्धकान् ।
संपश्यन्नपि निश्चयेन गदितुं को नाम लोकेऽर्हति
यद् वा काननमेव भीषणतरं, राज्ञोऽथवा पत्तनम् ॥

२४ कामं ते निशमय्य पञ्चमततीरञ्चन्तु लज्जां पिकाः
कामं वाङ्मधुरत्वगर्वमपि च प्रोज्झन्तु भृङ्गादयः ।
आस्तां लक्षमितं धनं !– भवसि चेल्लक्ष्यं त्विषोः कस्यचिद्
भाग्यं विद्धि तदप्यभोजनृपतौ काले कवे, ते परम् ॥

२५ "यः पुष्पस्य फलस्य वा न विषयस्त्यक्तोऽपि योऽसिच्छदैः
कोऽर्थः शूकशतावृत स्नुहितरो, तेन त्वयै"वं जनाः ।
वृत्या तत्कृतयाभितः सुनिपुणं गोपायितां वाटिकाम्
आस्थायाप्युपकारिणं कथमहो ! निन्दन्ति तं पादपम् ॥

२६ गिरिणा लवणाम्बुराशये जलसम्भारमुपायनीकृतम् ।
निजपृष्ठेन स केवलं वहन् किमु गर्वं विदधाति निर्झरः ॥

२७ उत्तिष्ठात्सि कियच्चिरं तृणम्" "अरे, शेषे मुखेऽह्लोऽपि किं,"
गोष्ठाद् हालिकशाकटौक्षकमिति प्रेर्य स्वकार्येऽधुना ।
सुप्तं तं वृषतल्लजं क्षणमपि, प्राप्तोऽत्र पल्लीपतेः
पुत्रो "गौर्गडि"रित्यताडयदहो ! धिग् वाम्यमेतद् विधेः! ॥

---

१ प्रतिकर्म प्रसाधनमङ्गसंस्कारो वेत्यमरः । प्रतिकार इत्यर्थेनापि पदमिदमत्रानुसन्धेयम् ।

२ "रिक्तो मूर्धा"– महाराष्ट्रभाषाप्रभावोऽयम् । रिक्तो मूर्धे-त्यज्ञजनवाचकं पदद्वयम् । गीर्वाणवाण्यामीदृग्विधप्रादेशिकवाक्प्रचाराणां युक्तायुक्तत्वस्य निर्णये विद्वांस एव प्रमाणम् ।

२८ केतोर्भावं सुवसनयुतः प्राकृतोऽप्येति वंशो
विष्णुः प्राप्नोत्यपि बटुदशां लुप्तपीताम्बरोऽसौ ।
इत्थं वासः प्रभवतितरां लौकिकालौकिकानां
सङ्गासङ्गैः खलु निजकृतैरुत्क्षिपच्चाक्षिपच्च ॥

२९ क्वचिद् हसन्ती रुदती कदाचित् क्वचिज्ज्वलन्तीव कुकूलराशौ ।
चन्द्राम्बुवाहोष्णमरीचिसङ्गाद् द्यौर्भाति रूपान्तरकृन् नटीव ॥
तांस्तान् गुणानाश्रयभेदहेतोः प्रकाशयन्त्यप्यतथाविधासौ ।
किं तद्गुणेनैवमतद्गुणत्वं काव्ये विधातुः समलंकरोति ॥

३० "अन्तःसज्जनखं निबद्धनयनद्वन्द्वं ग्रहालुञ्चने
नूनं मानुषविग्रहश्रितमिदं बैडालमेव व्रतम् ।"
"धिग् धिङ मूढविजल्पितं ! – भगवता तत् क्षम्यतां, कथ्यतां
चीयन्ते सुकृतोत्थशोभनफलाः कच्चिद् भवद्वृद्धयः ॥"

३१ त्वद्भक्त्या परितोषितं करुणया त्वां वीक्षमाणं गुरुं
दृष्ट्वा, तन्मुखपङ्कजाद् "हर हरे"त्याकर्ण्य चैते द्रुतम् ।
सच्छिष्याः प्रसभं हरन्ति निखिलानर्थादिपाशांस्तव
प्राप्तो मोक्ष इहैव किं परमितो गत्वापरं लप्स्यते ॥

३२ कस्यापि श्रुतिवर्जितस्य वचनं श्रद्धाय लोके चिराद्
वाङ्माधुर्यगुणो जनैर्मधुकरश्रेणीषु नीतः प्रथाम् ।
कामं कर्णकटु क्वणत्वलिकुलं लब्धप्रतिष्ठं ततः
को वा स्तौति न तन् नरोऽत्र निभृतं श्रोत्रं पिधायात्मनः ॥

३३ सेवां मानधनार्थिनो, वसुकृमेर्वृत्तिं सदार्थार्थिनो
वार्तामात्रसमुच्चयस्य वहनं शीर्षेण विद्यार्थिनः ।
निर्बन्धांश्च सहस्रशः प्रतिपदं मोक्षार्थिनः संदिशन्
नाचष्टे किमु कोविदारविटपान् पृष्टो रसालान् बुधः ॥

३४ संहतानुपरि वीक्ष्य पयोदान्, शङ्कितः प्रतिगजेभ्य इवेभः ।
निर्झरौघरसितव्यपदेशाद् बृंहितान्यमुचदेष नगेन्द्रः ॥

३५ स्वीयालक्तकरागरक्तचरणन्यासाय वृक्षान्तरा-
ण्युज्झित्वा गुलमोहरद्रुमशिरो दृष्ट्वा श्रियं वृण्वतीम् ।
आम्रः खेदवचोऽन्यपुष्टवचनव्याजात् स आम्रेडय-
त्येषोऽशोकतरुश्च शोकसहितो वैवर्ण्यमापद्यते ॥

३६ किंस्वित् कुम्भसमुद्भवेन मुनिना पीतोऽधुनाप्यर्णवः
किं शृङ्गाणि च भूभृतां कवलितान्यह्नाय तद्गह्वरैः ।
इत्थं, -प्राश्य तमोऽहिफेनमचिरात्[1] खं घूर्णमानेक्षणं
क्षीबत्वाद् विपरीततां गतमिव क्षोणीतलं पश्यति ॥

३७ [2]इन्दोर्वीक्ष्य कलङ्कमेतदवदत् कश्चित् कविर्भूतले
नीतं कृष्णधनं सहासुभिरिदं यातैर्विधोर्मण्डलम् ।
वृद्धीकृत्य निजं शरीरमिह यैः प्रत्यर्पितं तद् धनं
कौलीनेन तदाश्रयेण नु विधोः स्वान्तं तथास्त्याविलम् ॥

३८ अधित्यकामध्युषितो धराणां चुम्बन्निवाम्बूनि चलाम्बुराशौ ।
आश्लेष्टुकामश्च महीं समन्तात् त्वं दृश्यसे दृग्भ्रममात्रहेतोः ॥
एवं बुधास्त्वां प्रवदन्तु मायां भोश्चक्रवालेह तु नः पदानाम् ।
त्वदीयसंवी[3]क्षणकौतुकेन दिगन्तरे जातु पुरः प्रवृत्तिः ॥

३९ केचित् तत्करवर्तिनीमपि तुलामात्मेच्छयान्दोलय-
न्त्यन्ये तामधरोत्तरां विदधते मानैश्च कूटात्मकैः ।
धूर्तक्रीडनतामिमामिति गतां नालोकते यत् ततो
देवीं न्यायपदस्य दृष्टिविधुरां स्थानेऽक्षिमन्तो विदुः ॥

४० [4]नौरेष्यत्यधुनोदरं जलनिधेरेषेति कृत्वाखवो
द्रागुत्प्लुत्य बहिः पतन्ति, भवतात् तेषां शिवं वारिधौ !!
स्वीकृत्योर्मिचपेटिकाः कतिपया नौकाभवत् सा स्थिरा
दिष्टया दुःखमगात् क्षयं तदनिशं कृन्तत् तदीयान्तरम् ॥

४१ [5]गन्धाढ्योऽपि मधौ स चम्पकतरुः किं नालिभिः श्रीयते
प्रायो गन्धफलीविलोकनवशात् तेषां मनो भ्राम्यति ।
रोलम्बावलिमेव काञ्चन परां मत्वा स्थितां काञ्चनीं
ह्रीमूढा इव ते निजासिततया नो यान्ति तत्संनिधौ ॥

---

१ अहिफेनः- म्- 'अफू' इति भाषायाम् ।
२ तत्रभवतः कण्टकार्जुनस्य "चन्द्रस्य कालिमा" इति पद्यमुपलक्ष्य ।
३ संवीक्षणम्- अन्वेषणम् ।
४ समुद्राम्भसि प्राङ्नौकानिमज्जनात् तत्स्था मूषिका एव तां प्रथमं जहतीति लोकोक्तिः ।
५ "भ्राम्यन् वनान्ते नवमञ्जरीषु न षट्पदो गन्धफलीमजिघ्रत् ॥"

४२ "निक्षिप्य त्वयि भूप, भूतलधुरं शेषोऽद्य लब्धक्षण"-
स्तोषादीदृशसाधुवादवचनान्याकर्णयन् सस्मितः ।
राजा लक्षमितं धनं वितरति, ब्रूते त्विदं चेतसि
"वाक्पण्यान् [1]प्रतिशिष्टिबद्धनयनान् वेद्म्यञ्जसा वाणिजान्"

४३ [2]यथाशयं मण्डनमिश्रपण्डितः स्वकीयमङ्गीकृतवान् पराजयम् ।
शुकस्तु तद्गेहविटङ्कसंश्रितो जितं मयेत्युच्चरवो विकत्थते ।।

४४ "कमठपतिनोत्क्षिप्तैषोर्वी पुरा प्रलयाम्बुधेर्
अथ खलु विनिक्षिप्तास्मासु स्ववंशभवेष्वि"ति ।
प्रथयतितरां कूर्मो वोढुं क्षमो न निजाङ्गम-
प्यखिलधरणीभारोद्वाहात्मकं स्वकुलव्रतम् ।।

४५ वृक्षाग्राणि प्रथममवनेर्मस्तकेभ्यस्तरूणां
क्षोणीध्राणां तटमथ ततो मङ्क्षु नीतो दिगन्तान् ।
ध्वान्तैरेवं परिभवपदं प्रापितः कान्दिशीकस्
तेजोराशिः श्रित उडुगणं प्राप्तकालप्रतीक्षः ।।

४६ येषां मन्दिरदेहलेर्न परतो यातं कदापीक्षणं
तेषामल्पदृशां विभावनमिदं भूतेश्वर, क्षम्यताम् ।
तान् दृष्ट्वोद्यतशृङ्गरक्तनयनान् द्वारि स्थितान् नन्दिनः
किं वाश्चर्यममीभिरत्रभवतश्चेद् रुद्रता कल्प्यते ।।

४७ यद् यादृच्छिकमेव किञ्चन फलं तत् स्वार्जितं कथ्यते
यत् किञ्चाप्ययशो यशो महदिति प्रोच्चैस्तदाख्यायते ।
ढक्कादुन्दुभिडिण्डिमैर्निशि दिवा कर्णेष्विदं घुष्यते
यैरेषोद्भटचातुरी प्रकटिता लोके जनांस्तान् नुमः ।।

४८ नीतं पिच्छिलतां महीतलमिदं बाष्पैरलीकैरपि
सर्वा एव सितीकृताः खलु दिशो हास्यैस्तथा कृत्रिमैः ।
आपूर्णं गगनं च शून्यमनसाप्युक्तैर्वचोभिर्मृषे-
त्यस्माभिर्यवतण्डुलप्रसृतये किं नाम नो नाटितम् ।।

४९ यन्ता रथस्याहिमरोचिषोऽभूच् छश्वत् समासादितपङ्गुभावः ।
प्रायेण सम्यङ् न महातरूणां छायासु वृक्षान्तरमेति वृद्धिम् ।।

---

१ प्रतिशिष्टिः – "दलाली" इति भाषायाम् ।
२ यथाशयम् – "यथासङ्केतम् ।"

५० यैर्भास्वद्द्युतिरीक्षिता न, न कदाप्याभैन्दवी लक्षिता
तैरेभिर्गिरिगह्वरोदरकृतावासैर्मिथो जन्तुभिः ।
कीटं बिन्दुमितप्रभं क्वचिदिमं दृष्ट्वोदितं विस्मयाद्
यत् "प्राप्तो नु रथाङ्गपाणिरवनीं धृत्वाद्य रूपं नवम्" ॥

५१ न्यायस्य प्रतिमेत्यमंस्त जडधीः कश्चिच्छिलोट्टङ्किताँ
दुर्गे वीक्ष्य तुलां नृपस्य; कृतवान् नैतच्छ्रुतेर्गोचरम् ।
यत् कोटः प्रतिपक्षकृत्तरसनासृग्लिप्तभित्तिस्त्वसौ
नीचैः प्राह यथा "नयैव तुलया रक्तोऽहमेवं कृतः" ॥

५२ "खगान् स्म गृह्णाति स वागुरादिभिर्
नरः"— पुरावृत्तमिदं निशम्यते ।
अस्मिंस्तु काले प्रसभं जनानहो !
वाग्जालकैः [1]पक्षिगणो नियच्छति ॥

५३ अन्तर्जलेष्वपि कथं महतोऽम्बुराशेर्
और्वानलो ज्वलति-किं नु तदत्र चित्रम् ।
किं भूयसा नयविदां प्रसरेषु वाचां
नार्थः स्थितोऽस्ति निभृतं विपरीत एव ॥

५४ अनिमेषकमप्यवेक्षणं न भवेत् प्रत्ययकारणं सदा ।
इति वक्त्यनिशं न मीलितं बडिशाकृष्टतिमेर्विलोचनम् ॥

५५ तिमितिमिङ्गिलतद्गिलराघवा यदभवत् स्वयमेव मनोर्झषः ।
न्यधित तत् स निजस्थितिबीजकान्यपि पुनः प्रलयोद्गतभूतले ॥
वयमिमे तिमयोऽत्र तदुद्भवाः कितवधूर्तखलास्तिमिवृत्तयः ।
निगिरतो गिलितांश्च तथाखिलानभिपतन् यमराट् स च राघवः

५६ "खद्योतत्वमुपाहितं दिनकरे त्वत्तेजसा भूपते,
चन्द्रे मेचकचन्द्रकत्वमपि" तत् तादृग्विधं जल्पतः ।
दृष्ट्वा चाटुपटून् निबद्धचरणाञ् जाम्बूनदैः शृङ्खलैः
स्थाने खल्वदसीयनाम विहितं बन्दीति वाचां विदैः ॥

५७ आनाकपातालतलं निजेच्छया
गतिं चरन्तीं मनुजन्मचेतसाम्
नभःपथावर्तनमात्रशक्तिभिः
कथं विजेतुं पवनैर्गवेष्यते ॥

---

१ पक्षिगणः — पक्षपक्षान्तरपक्षपातिनः ।

५८ बालार्कांशुभिरंशुकं विरचयै किं पीतवासःकृते
वर्णैरिन्द्रधनुर्गतैरुत वयान्यैरावणार्थे कुथान् ।
प्रेक्ष्यन्तां सुकुविन्द, तादृशसुखस्वप्नाः सुषुप्तौ, सखे
गोणातुल्यमिहोदरार्थमपि ते किञ्चिद् विनिर्मीयताम् ॥

५९ [1]स्तोकात् स्तोकतरं क्रमात् पदमिता सेयं विवेकच्युते-
त्येवं कुत्सयते कविस्त्रिपथगे, त्वां मन्महेऽन्यत् त्विदम् ।
त्रैलोक्यस्य पुपूषयोज्झितदिवः श्रेयस्तदप्युन्नतेः
पातालावधि यत् तव प्रपतनं, श्रीः सैव तेऽनुत्तमा ॥

६० उद्भ्रान्तोऽस्यतिमृदुमातरिश्वसङ्गात्
सौत्सुक्यं जलदघटाः करोषि संज्ञाः
उद्ग्रीवं प्रतिदिशमीक्षसे च सोत्कः
कस्मात् ते वद[2] चलपत्र, तच्चलत्वम् ॥

६१ अध्यष्टापदभूयमुन्नमयतः कृष्णायसं [3]संस्तवात्
कोऽलं लङ्घयितुं तव त्रिभुवने, स्पर्शोपलैनां प्रथाम् ।
वाच्यं केवलमेतदेव तु महद्, यत् पक्षपातोद्भवान्
दोषान् संकथयत्सु धातुषु भवन्नामाग्रिमं वर्तते ॥

६२ यत्नानात्मसहाय एव कृतवान् यो रोद्धुमन्धं तमो
दोषायै क्षणदापदं निजगुणस्नेहैश्च यो दत्तवान् ।
दीपोऽसौ रजनीक्षये हतदशः प्रत्यग्रजातैः करैर्
अह्नां पत्युरहो बतैवमधुना न्यक्कृत्य निर्वाप्यते ॥

६३ जीर्णं वामिषमस्थिभूय इव वा तत् पूतगन्ध्यस्तु वा
क्षीणाङ्गस्य मृतस्य कस्यचिदपि स्तोकं तिरश्चोऽस्तु वा ।
आनीतं पुरतोऽत्तुमिच्छति हरिः क्षुत्पीडितः पञ्जरे
दृष्ट्वा चेतसि दन्तिनां तु हसितं, द्राक् तत् तथैवोज्झति ॥

६४ " जातेऽस्मिन्नवनीतलेऽप्रतिभटे वज्रेभ्य एभ्योऽधुना
त्रायन्ताममरा मदङ्गुलिसमुद्भूतेभ्य आशाद्विपान् " ।
दिक्षु स्वोर्जितगर्जितप्रतिरवान् नाद्यापि लीनानिमाञ्-
शृण्वन्नेष सुसंदितो[4] हतरवः कण्ठीरवस्तिष्ठति ॥

---

१ अधोऽधो गङ्गेयं...भवति विनिपातः शतमुखः ।

२ चलपत्रः- " बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः " इत्यमरः

३ संस्तवः– स्तुतिः परिचयश्च । अष्टापदम्-स्वर्णम् । अष्टसु धातुषु पदं यस्य तत् ।

४ करुश्येव:

६५ शृण्वन्नधस्तात् तृणमेलकस्वनं
विलोकयंश्चात्मसमं न कञ्चन ।
मरौ निजैकाकितयाभितापित:
स्वां प्रांशुतामेव तरुर्विनिन्दति ॥

६६ हरिन्मातङ्गानामपि नयनयोर्गोचरत्वं गतानां
भिनद्मि द्राक् कुम्भानिति निजनखान् यान् प्रतिग्रावपृष्ठम् ।
पुरासीच्छीशांसन् वनभुवि,- गतः साम्प्रतं पारवश्यं
स्वकीयान्येवाङ्गान्यहह! मृगराट् तैर्निकृन्तन्निहास्ते ॥

६७ श्रियं दुरितसंचितां प्रचुरमानपत्रैर्वृताम्
असत्कृतिफलान्वितामपि च सत्कृतिं लोकयन् ।
"प्ररोहति यथोप्तबीजमवनौ लता सर्वदे-"
त्यपष्ठु पठतां सतामपि कथं गिरः श्रद्दधे ॥

६८ यैरक्षीणि परःशतान्यपि लघूकृत्य द्युभर्तुः पुरा
कार्ष्ण्यं फूत्कृतिभिः क्षणाच्छुचितमो नीतोऽश्व उच्चैःश्रवाः ।
एवं तैः कृतविक्रमैर्द्विरसनैर्लोकेऽपि नाकौकसां
किं चित्रं, यदि यत् सितं तदसितं द्राग् भूतले दृश्यते ॥

६९ क्षणमपि परिक्षीणो, वृद्धोऽप्यसि क्षणमन्यथे-
त्यभिनयसि किं तच्चारित्रं हरेर्बटुरूपिण: ।
प्रकटितवतो लोके त्वस्मिन् पुरस्तदतद्विदां
जलद, भवतो जीर्णं स्वाङ्गे कुशीलवकौशलम् ॥

७० साक्षादेष शिवोऽन्धकारगरलं पीत्वापि दीप्त्या पुनन्
कृत्वैवं शलभोऽञ्जसार्चितुमितो दीपं, वियुक्तोऽसुभिः ।
प्रायेणाल्पधियो न तस्य विदितं यल्लौकिकज्ञैर्बुधैर्
आम्नातौ पिशुनेश्वराविह समौ दूरात् प्रतीक्ष्यौ यतः ॥

७१ गङ्गास्रोतसि यत्र मज्जति भिया विश्वेश्वरोऽपि स्वयं
तत्रैव स्थिरलोचनो विषहतेऽभीक्षणान् प्रहारान् वृषः ।
[1]ऐतिह्ये किल तादृशं श्रुतवतां, लोकेऽपि तत् पश्यताम्
अग्रे नो गुरुलाघवं यदिह तत् सर्वं विपर्यासितम् ॥

---

१ यवनैराक्रान्तायां वाराणस्यां मणिकर्णिकातीर्थेऽवतीर्य विश्वेश्वरः स्वात्मानं रक्षितवानिति लोकोक्तिः ।

७२ परस्परस्कन्धकृताधिरोहणी संप्रापयेन्नो न चिरादितो दिवम् ।
मिथः प्रजल्पत्सु पुरेदृशं नृषु मृगाट्टहासैर्वनमप्यदीप्यत ।।

अत्यद्भुतां निःश्रयणीं तु तादृशीं विधाय यातोऽपि नरो दशान्तरम् ।
अन्योन्यपत्कर्षणमेव मन्यते मार्गं दिवोऽद्यैष खगैश्च हस्यते ।।

७३ स्वीयकर्मणि नियोजयेन्नु को मत्परेऽम्बरमणिं परेद्यवि ।
एवमादि परिचिन्तयन् भृशं कल्प्यतेऽद्य कृकवाकुरन्धसे ।।

[1]अस्तु बुद्धवचनस्य विस्मृतिर्दूरतोऽस्तु च कृतज्ञतापि सा ।
रक्ष्य आत्महितमात्रकाङ्क्षिभिर्योऽखिलैरपि स हन्त! हन्यते ।।

पक्षिराज! न विचार्य निघ्नतस्त्वां, नरस्य धिगदूरदर्शिताम् ।
मङ्क्ष्यतीदमचिराद् यतोऽधुना विश्वमन्धतमसेष्वनायतेः[2] ।।

" विद्या ह वै ब्राह्मणमित्यवोचत "

७४ श्रुतिस्मृतीनामपि पारगामिनं निनिन्दिवांसं क्वचिदात्मदुर्गतिम् ।
गता सुषुप्तौ क्षणलक्षणीयतां विद्या ह वै ब्राह्मणमित्यवोचत ।।

न पक्षिसामान्यतयापि पक्षयोर्यस्य क्षमत्वं क्रमणे विहायसः ।
खगाह्वमात्रे विहितं शिखावले तस्मिंस्त्वया मे पदमम्बरपृशः ।।

अप्यर्कतेजोऽतिगलोचनद्युतिं व्यधाश्च मां मेचकमात्रचक्षुषम् ।
आख्याहि, तद् विप्र, कथं समाश्रये बहुश्रुतस्याप्यहमालयं तव ।।

७५ " सा विद्यात्मविमुक्तये भवति या या कल्पते चामृत-
प्राप्त्यायि"त्युदिता गिरो बुधजनैर्भूयिष्ठमाकर्णयन् ।
उच्चैरर्थचयो हसन्निव झणत्कारच्छलेनावदत्
" प्राप्यन्ते मदनुग्रहाः खलु यया तामेव विद्यां विदुः ।।

७६ आरामान् परनिर्मितान् स्वगृहवद् ये स्वेच्छयाध्यासते
पश्यन्त्यत्रपमात्मजान् बलिभुजां नीडेषु ये वर्धितान् ।
भूयोभूय उदच्य पञ्चमततीस्ते केवलं हारिणीर्
एधन्ते [3]सहकारशाखिनिलया अत्रान्यपुष्टाः सुखम् ।।

---

१ बुद्धवचनम्- " अहिंसा परमो धर्मः । " इति
२ आयतिः- " उत्तरः कालः । " इत्यमरः
३ सहकारः सहकार्यम् आम्रवृक्षश्च ।

७७ निश्रेणिपङ्क्तिस्थितमेतदाह कपित्रयं[१] किञ्चिदिवादिदिक्षु ।
संदर्शयाकर्णितलक्षितोक्तान्यत्रानुभूयाप्यतथाविधानि ॥
सोपानपङ्क्त्यन्तरमास्थितं तद् हरित्रयं त्वेतदवोचदन्यत् ।
नोक्तं न दृष्टं न तथा श्रुतं च प्रदर्शयस्वैवमिहान्यथैव ॥
न तत्र नैवात्र च ये भवामः प्रेक्षामहे ते वयमद्भुतानि ।
लोके पुरस्तादभितश्च तादृग्विधान्यवस्थान्तरकौतुकानि ॥

७८ अवस्थे, त्वत्पारिप्लवनयनयुग्मस्थ तरल-
प्रसादक्रोधाभ्यां जगति गुणदोषौ प्रभवतः ।
क्वचिन्छ्वा सिंहस्य स्थित इह पदे गर्जतितरां
क्वचिज्जालैर्बद्धो भषति च हरिः कुक्कुर इव ॥

७९ शतपदी शतपादभराकुला पदमपि क्रमितुं न सुखं क्षमा ।
अचरणस्त्वरुणोंऽशुमतो रथं नियतमापयतेऽस्तगिरेस्तटम् ॥
विफलतां बहुसाधनता गता तदितरा च कृतार्थतया युता ।
इति विलोकयतोऽत्र ममाग्रतो व्रजति साधनतार्थविपर्ययम् ॥

**– तथापि, किमपि उपकरणमावश्यकमेव**

८० वदन्ति फलकारणं जगति सत्त्वमेके, परं
विनोपकरणं तदेधरहिताग्निवन् मन्महे ।
हिरण्यकशिपुर्हृते नख-परिच्छदात् केवलं
किमात्मगतसत्त्वतो नृहरिणाप्यसौ ध्वंसितः ॥

८१ कृत्वा कृत्वा हताशान् दिशि दिशि शिखिनश्चातकानां च पोतान्
मोघीकृत्यार्थनानां शतमपि च तृषा व्याकुलानां जनानाम् ।
नैष्कारुण्याद् द्युमार्गानुदरगतजलैर्मेदुरोऽप्येष गच्छन्
संस्कारान् वारिवाहो लवणजलभवान् प्राक्तनान् नोज्झतीव ॥

८२ तिर्यक् सप्रसभं प्रयान्ति करभा, उच्छृङ्खला वाजिनः
स्वच्छन्दं चरणाहतीः प्रददते, यान्तोऽग्रतश्च द्विपाः ।
संमृद्नन्त्यविशेषतो निजपरान् योधानिहाष्टापदे[२]
राजा दारुमयस्तथैव सचिवः, कस्मै किमाचक्ष्महे ॥

---

१ चीनदेशादागता मर्कटत्रयकथा लोकविश्रुतैव वर्तते । लौकिकव्यवहारानुसारेण तस्याः कथाया नूतनोऽयमाविष्कारः ।

२ " अष्टापदोऽस्त्री कनके शारीणां फलकेऽपि च " । इति मेदिनी

८३ पूर्वं कालियमङ्घ्रिणोल्बणविषं संपीडयन् रंहसा
वार्ष्णेयोऽपि कथीकृतो निजबलाद् येनैव तस्याधुना ।
शीर्षे कालमहोरगस्य तु पुनः, कृष्णापणः कृष्णवच्-
चित्रं [1]पुष्पितवाग्वधूजनवृतो हल्लीशकं खेलति ॥

८४ सौवर्णवर्णाङ्कितकेतुभिर्दिवं घोषैरुदारैश्च विधुन्वतो महीम्
तान् पक्षपक्षान्तरपक्षपातिनः संपश्यतो जात्विदमस्ति मेऽन्तरे ॥
खगा मृगा वा ध्वजसंनिवेशितस्वचिह्नलग्नास्वपि लाभहानिषु ।
यथा पुरोदासिषतैव सर्वथा स्वार्थेषु घोषा अपि निःस्पृहास्तथा ॥

८५ गौरीनृत्तारम्भे निशम्य मुरजध्वनिं, घनस्वानम् ।
परिशङ्कमान आसीत् कुमारबर्ही निनृत्सुरूर्ध्वज्ञुः ॥
संरम्भाद् भ्रश्यन्तं तदाग्रजं वीक्ष्य तस्य पृष्ठगतम् ।
नागास्यो निजकुक्षिं निपीडयन्नेष उच्चकैर्हसति ॥

८६ क्वचिन् नृशंसत्वमितं नृशस्यतां[2]
क्वचिन् नृबुद्धिश्च नभोऽग्ररोहणी ।
गणस्तिरश्चां नु ततोऽस्त्यधोमुखो
दिवौकसां चाप्यनिमेषलोचनः ॥

८७ आसीद् वै शिवभूपतिर्भवति वै तस्यातपत्रं महत्
तस्माच्छत्रपतिः स वै किमिव वै लिख्येत चातः परम् ।
वैवैकारमगात् कथं कथमपि श्लोकार्धमेवं कविः
पारं काव्यमहोदधेर्जिगमिषुं तं पान्तु चत्वादयः ॥[3]

८८ एषा न निर्यात्युदयाचलादुषा नारायणोरुप्रभवेयमुर्वशी ।
भूयोऽपि भर्तुस्त्रिदिवस्य भूयसा मुष्णाति तेजांसि सहस्रचक्षुषाम् ॥

८९ तांस्तान् वीक्ष्य पुरोऽभितश्च ललितान् स्वर्गाङ्गनाविभ्रमान्
जातानीव सहस्रशोऽक्षियुगलान्यङ्गेष्वरण्यौकसः ।
दृष्ट्वैवं विहितं सहस्रनयनं स्वेनायुधेनैव तं
शक्रः सानुशयो विनिर्जितमिवात्मानं तदाजीगणत् ॥

---

१ पुष्पितवाग्वधूजनवृतः इत्यत्र श्लिष्टं पदम् । कृष्णापणपक्षे-पुष्पितवाचः ( फ्लॉवरी स्पीच् ऑर् टॉल टॉक् ) एव वधूजनः इति कर्मधारयः । कृष्णपक्षे तु पुष्पिता वाचो यस्य स वधूजन इति बहुव्रीहिः ।

२ क्रूरकर्माणो नृशंसा अपि क्वचिदितिहासग्रन्थेषु " गाझी " इत्यादिभिः प्राशस्त्यवाचकैरुपाधिभिः स्तूयमाना दृश्यन्ते ।

३ चत्वादयः – " च-वै-तु-हि-प्रभृतयः । "

९० सौवीरेषु[1] च सैन्धवेषु च जनोदन्तोऽस्ति को वाधुने-
त्येषा मूढविचारणेति वदतस्तान् धीमतो ब्रूमहे ।
कालेऽस्मिन् विधुभास्करादिविषये वार्ताभिरत्युत्सुका-
ञ्छास्त्रज्ञानवलोक्य को नु भवतां वाचां विलासो भवेत् ॥

९१ अप्राप्य टङ्कोत्कषणं न जातुचित् [2]सुपर्वतां ग्रावगणोऽधिरोहति ।
इत्यवमाकर्णयतां तु चेतसां प्रवृत्तिरस्माकमतथ्यशङ्किनी ॥
सिन्दूरमात्रार्पितदेवतापदान् विलोकयद्भिः प्रतिरथ्यमश्मनः ।
कथं तदस्माभिरहो ! प्रतीयताम् अकद्वदैरप्युदितं मनीषिभिः ॥

९२ साजात्यादभ्रखण्ड, प्रतिसरसि महामेघमाश्लेष्टुकामः
किन्त्वात्मा रक्षणीयस्त्वयि निपिपतिषोः सोदरादप्यमुष्मात् ।
[3]ज्ञातं ते तन् न मन्ये, निगदति निपुणं यत् कविर्लौकिकज्ञो
भेतव्यं स्वीयपक्षान्, न खलु बलवतोऽप्यन्यपक्षात् तथेति ॥

९३ वीक्षितोऽद्य सुरवर्त्मनि योऽसौ मेचकाभमसृणोऽपि नाम्बुदः ।
सत्यमेष तु तिलोऽम्बरलक्ष्मीचारुगण्डपरिणाहसंस्थितः ॥

९४ साक्षीभूत इहैक एव रजनीयामे प्रदीपोऽर्चिषा
बद्ध्वेवाङ्गुलिसंपुटं जिगमिषोः शौद्धोदनेः काननम् ।
उच्चैः पुत्रपरिग्रहोज्झनकथां धूमच्छलेनालिखन्
मुक्तो वाश्रुकणो न वोज्झितकृतेऽप्येतेन, – को वेत्ति तत् ॥

९५ खेदो नैव बटुच्छलादपहृताशेषश्रियोऽप्यद्य मे
दुःखं त्वेतदतीव पीडयति यद् दित्सुर्जनोऽतः परम् ।
गच्छेद् दानपराङमुखत्वमवनौ पात्रेऽपि शङ्कां वहन्
इत्युक्त्वा बलिना त्रिविक्रमपदे न्यासि स्वकीयं शिरः ॥

९६ बालः प्रज्वलितेध्मवह्निसदृशो मातुः सपत्न्याऽऽपितः
पादाघातनिकारमेष उचितं चेतुं पदं प्रस्थितः ।
यातो मानमहान् यतस्त्रिदिवमप्येकान्तमातिष्ठते
तन् मन्ये, परिहर्तुमिच्छति मरुद्वृन्दाङ्घ्रिसंघट्टनम् ॥

---

१ "का वार्ता सिन्धुसौवीरे, मेषस्याण्डं कियत्पलम् ।
काकस्य कति वा दन्ता, एषा मूर्खविचारणा ॥"
२ "सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ।" इत्यमरः
३ "स्वपक्षाद् भेतव्यं न तु बहुविपक्षात् प्रभवतः ।" इति भल्लटः ।

९७ "नीतिः कीरवदाश्रिता खलु फलप्राप्त्याशया या मया
नीतासौ सहसैव शाल्मलितरोर्भावं विपक्षोद्यमैः ।
अन्तस्तूलतया विडम्बयति मां स्मित्वा नु सैवाधुना"
चाणक्येन जितो व्यलोकयदिदं दृष्टेः पुरो राक्षसः ॥

९८ अङ्गुष्ठं गुरुदक्षिणेति वितरन् मच्छोणितैरुक्षितं
हृष्टोऽस्म्यङ्गिरसां वरे"ति विनयादुक्त्वैकलव्यो गतः ।
द्रोणोऽभूत् तु तदा समाकुलमना यान्तं तमालोकयन्
मेने च स्ववपुर्ह्रिया परिगतं शिष्याङ्गुलीमालितम् ॥

९९ कष्टेनैकधनुर्धरत्वपदवी पार्थार्थमासादिता
सोत्सेको द्रुपदाधमश्च पुरतो बन्दित्वमापादितः ।
सञ्जातेऽपि यथाप्रतिज्ञमधुना द्रोणस्तु संतप्यते
कान्तारं प्रति वीक्षते, स्मरति च च्छात्रस्य कृत्ताङ्गुलेः ॥

१०० कम्पन्ते गिरयोऽर्जुनस्य धनुषष्टङ्कारमात्रश्रवाद्
उद्विग्ना इव यान्ति चाखिलदिशोऽप्यद्यान्तरिक्षाश्रयम् ।
शिष्योत्कर्षसमुत्थहर्षसमयेऽप्यस्मिंस्तु चेतो गुरोः
कृत्ताङ्गुष्ठशिशोः शरासनरवैः संनाद्यते संस्मृतैः ।

१०१ कामं नः प्रतिमार्चका इति जना निन्दन्तु ते भूयसा
प्रत्येताञ्, जडबुद्धयोऽपि तु वयं वच्मो, यदि श्रूयते ।
विद्यां काननवासिने वितरतश्चापस्य तां मार्तिक-
द्रोणस्योपमितिं नृपाङ्गणगतो द्रोणो व्रजेत् किं स्वयम् ॥

१०२ पुत्रास्ते पुरतो हता, अपहृता गौः कामधुक् चाश्रमाद्
अग्र्य त्वं वशिनां वशिष्ठ, न तथाप्यैषि क्वचिद् विक्रियाम् ।
त्वच्चारित्रविलोकनात् खलु पुनर्जातो द्विजोऽद्यार्थतो
विश्वामित्रपदं विहाय भवितुं विश्वस्य मित्रं यते ॥

१०३ वाङ्मयादिषु परोपजीविनां दूषयंस्त्वमिह शर्विलकत्वम् ।
पौनरुक्त्यमपि भानुतेजसां किं पिपाससि सुधेति हिमांशो ॥

१०४ क्वासौ मद्विहितो विरिञ्चिमधरीकर्तुं प्रयत्नो महान्
स्वर्योषिच्चरणे लुठच्छुनकवच् चेतः क्व चैतादृशम् ।
इत्थं चिन्तयता तु तेन मुनिना स्वप्नान्तरैस्तैः समं
यान्ती स्वप्नविलायमेव विलयं साप्यङ्गना नेक्षिता ॥

१०५ भृगुषु रघुषूद्भूतं लोकेऽप्यनन्वयमञ्जसा
व्यसनमुदयं ज्योतिर्युग्मं क्रमेण यदाभ्यगात् ।
समिव तदा भानोः पूर्वापराचलसंस्थिते
सभयचकितं दृष्ट्वा बिम्बे व्यकम्पत मेदिनी ॥

१०६ अस्तोन्मुखं भार्गवमेकतोऽन्यतो दृष्ट्वावतारं च समुद्गतं नवम् ।
शुचो मुदो वा पदमित्यनिश्चयाद् बभूवुरत्यन्तमिवाकुला दिशः ॥
सा पर्शुधारापि गता न विस्मृतिं ज्यास्फालनं चेदृशमश्रुतं, ततः ।
सगद्गदा उष्णजडाश्रुभिर्द्वयोर् जगुर्जयोदाहरणं दिगङ्गनाः ॥

१०७ भूयो दृष्टमबोधपूर्वकमपि स्वप्नेषु यत्, तद् यदा
सार्धं गाधिसुतेन वामनतपःस्थानं गतो राघवः ।
[1]प्राहैवं स तदोन्मना इव "पदं क्वैतत् तृतीयं क्षिपे"
शृण्वंस्तन् मुनिरब्रवीत् स्वहृदये, "चित्तेऽस्तु तन् मे चिरम्" ॥

१०८ पुत्रावध्वररक्षणार्थमृषिणा भूपोऽर्थितोऽभाषत
"सव्यासव्यकराविमौ मम मुने! शक्ष्यामि दातुं कथम्" ॥
आकर्ण्योत्तरकोशलेश्वरवचस्तूर्णं यियासुर्मुनिः
सोल्लुण्ठं क्षणमैक्षतेव नृपतेः पाणिं सबाणासनम् ॥

१०९ पश्यन् [2]पङ्क्तिरथोऽन्तरा निजसुतान् संक्रीडमानानितः
शापं विप्रकृतोरगोपममितो भूयः स्मरंश्चान्तरा ।
"अप्यारान् निभृतस्थितान्तकपदामभ्येति शब्दः श्रुतिं"
कृत्वेवं भ्रमतः स्वपुत्रचरणन्यासश्रवाद् वेपते ॥

११० "कस्मात् स्यन्दन आगतोऽसिततरो," "धर्मात्मना प्रेषितः"
"किं रामेण" "यमेन तत्रभवतेऽत्याकर्ण्य सूताद् वचः ।
कृत्वा राम इति भ्रमेण तु यमस्थाने सुतं प्रेक्षितुं
न्यक्षेपि प्रसभं नृपेण- न रथे- स्वात्मान्तकस्यानने ॥

१११ सारथ्यं निपुणेन येन विहितं क्षोभेषु रथ्यान्तरे
भग्नाक्षं समरेऽक्षतां स्वयमितो योऽधारयत् स्यन्दनम् ।
तेनैवैष करेण मृच्छकटवत् क्षिप्तोऽधुना कुट्टिमे
प्रत्यङ्गं विकलीकृतो निपतति प्रासादकोणे रथः ॥

---

१ उन्मनाः प्रथमजन्मचेष्टितान्यस्मरन्नपि बभूव राघवः । " रघु.
२ पङ्क्तिरथः– दशरथः ।

११२ अयोध्यया वेपथुमत्कराभ्यां सकज्जलास्राविलवीक्षितैश्च ।
रामाय कान्तारगमोन्मुखाय या आशिषः प्राज्यतरा विसृष्टाः।
ता एव नूनं व्रजतोऽस्य मार्गे सीतासहायस्य सहानुजस्य ।
समूर्तिकल्पा इव पृष्ठरक्षाश्छायाच्छलेनानुपदं प्रयान्ति ।।

११३ तातः स्नेहार्द्रदृष्ट्या जलद इव नगं स्नापयन् सर्वतो मां
पश्यन्त्यम्बापि सैषा शरदिव विशदालोकितैः काननान्तम् ।
दृष्ट्वा साकेतमेवं स्वनयनपुरतो राघवोऽरण्यमार्गे
धत्ते शङ्कामिवान्तर्यदहमिह वनात् किं पुनर्याम्ययोध्याम् ।।

११४ भूयः पञ्चवटी किमाह्वयति मामेतर्हि कालाद् बहोः
किं स्वप्नेषु तपोधनाश्रमपदान्याकारयन्तीव माम् ।
एवं विस्मयमावहन्त्यवनिजा नो वेत्ति यत् काननं
सत्यंकारमिवात्मनोऽन्तशरणस्योपाददधात् तच्छलात् ।।

११५ " रक्षेत् प्राणपरिक्रयादपि सुखं यान् धर्मदाराञ्जनस्
तेषामत्यपणिष्ट यः स्थिरतया नाम्ना यथार्थो नृपः
चित्रं! द्यूतकरः स धर्मवचनान्यक्षैः सहैवास्यती-
त्येवं मे श्रवणं कलङ्कयदिदं धिग्, ध्वंसतां वासरम् ।।

११६ पण्यस्थानगतान् पशूनिव पतीन् स्वान् रज्जुबद्धानितो
भीष्मादीनपि भस्मनामिव चयान् वृद्धानितस्तिष्ठतः
उत्कीर्णामिव संसदं च नृपतेः संलक्षयन्त्याग्रतो
दास्यं बद्धविलोचनश्रुतिमुखं साक्षात्कृतं कृष्णया ।।

११७ पाञ्चाली निकृता तथा, वनचरैः साकं भ्रमन्त्यात्मजा,
वृत्तिर्भैक्ष्यमयी स्वकीयनगरे, नैवान्तकोऽप्यन्तिके ।
कष्टात् कष्टतरं गतैवमनिशं शङ्काकुला सर्वतो
भीता दुःखविपर्ययादपि पृथावाञ्छच्चिरायापदम्[1] ।।

११८ नीलं तद् द्युवितानमक्षिसुभगं, पुण्योदकासौ कुभा[2]
सानून्यद्रिपतेश्च तानि मरुतां संस्तम्भयन्त्यध्वनः ।
तत् सर्वं विरलाङ्गुलेरिव करात् पाथो द्रुतं निःसृतं
गान्धारीक्षणबद्धपट्टपटले स्वप्नोपमं प्रेक्षत ।।

---

१ " आपदः सन्तु नः शश्वत् । "
२ कुभा – " काबूल " नदी

११९ चेतो नन्दतु मे चिराय वसुधां दृष्ट्वा मनोहारिणीं
शश्वद् यातु कृतार्थभावमपि तद् वीक्ष्योज्ज्वलं द्योर्मुखम् ।
तान् कौमारमनोरथानशनिना प्लुष्टानिवानोकहान्
गान्धारी हृदये ररक्ष [1]कुणपश्वभ्रेऽस्थिशेषानिव ॥

१२० "पुष्णात्यात्मभवान् यतः किल जले कूर्मी[2] ततो वञ्चिता
मातुः स्नेहमयेक्षणाद् वयमितो हा अम्ब, यामोऽम्बरम् ।"
गान्धारी श्रुतिमात्रलक्षितसुता तत्क्रन्दितानीदृशा-
न्याकर्ण्यैव मुहुर्मुहुः श्रवणयोर्बन्धेऽपि तेने स्पृहाम् ॥

१२१ अत्रैषोऽर्थयते जलं कुरुपतिर्गण्डूषमात्रं रणे
कृष्यन्ते च वृकादिभिः सरभसं तस्यानुजास्तत्र ते ।
इत्थंकारमलोकतेव मनसि व्याजादतीतस्मृते-
र्गान्धार्यन्तकृतो मुखं प्रविचलद् रोमन्थमभ्यस्यतः ॥

१२२ धिग् दौर्भाग्यमिदं ममावनिपते, वृद्धाय ते शंसतो
वाम्यस्यैव विधेस्त्वदात्मजवधप्रायाः कथाः केवलम् ।"
तादृक्षं निशमय्य सञ्जयमुखान् मज्जन्नधोऽध्रो नृपो
जात्यन्धः स्म विलोकतेऽन्धतमसैर्दृष्टेस्तमोऽप्यावृतम् ॥

१२३ "[3]वत्सोद्वाहनिमित्त एष भवतु स्नेहश्चिरायावयोः"
श्रुत्वा मत्स्यनृपेरितां गिरमिमां सप्रश्रयां भूपतिः ।
अक्षक्षेपभवां क्षतिं परिमृशंस्तूष्णीं बभूव क्षणं
साकूतं निरवर्णयच्च स निजं वासोऽन्तरं सस्मितः ॥

१२४ यत् साक्षाद् भगवन्मुखादधिगतं ज्ञानं पुरा तद्बला-
ज्जित्वैष्यामि रिपूनसंशयमिति प्रोच्चैर्वदन्ती प्रगे ।
जिह्वा सैव जयद्रथाङ्घ्रिमृदिता प्राहैतदेवार्जुनेर्-
"ज्ञानं हन्ति समूलघातमिह तद् यत् सामिसंपादितम्" ॥

---

१ कुणपश्वभ्रम् – मृतगृहम् "थडगें" इति भाषायाम् ।

२ जलमध्यगता कूर्मी केवलं स्नेहमयेन चक्षुषैव स्वान्यपत्यानि पुष्णातीति पुरातनो महाराष्ट्रकविसङ्केतः ।

३ वत्सोद्वाहः – अभिमन्योरुत्तरायाश्चोद्वाहः ।

१२५ न वारयितुमन्वयक्षयमभूद् यदेतत् क्षमं
बलं मम तदत्र भीष्म इति मां किमेते विदुः ।
इतीव शरतल्पगः कुरुपितामहश्चिन्तय-
न्नभीष्मभवमञ्जसा व्यगणयत् कुरूणां कुलम् ॥

१२६ अन्त "स्त्वामधुनैष भीमहतक, प्रेष्यामि कालालयं"
प्राकाश्ये, " तनयैहि मां घनतराश्लेषैः समाह्लादय ।"
एतद् दम्भविजृम्भितं प्रकटयन्नन्धो नृपोऽद्यावधि
[1]प्रत्याशं धृतराष्ट्रतामुपगतेष्वालोक्यतेऽनारतम् ॥

१२७ " यदि युधि कुरुनाथः स्वानरातीनजेष्यत्
कमपि च निजपक्षं शंसितुं व्यासमाप्स्यत् ।
ननु कथमभविष्यत्, तत् कथा भारतानाम्
इति वदति मनो मे दुर्विनीतं कदाचित् ॥

१२८ अश्वत्थामन् यदपि निवसन् भूतलेऽस्मिंश्चिराय
स्थानात् स्थानान्तरमसि सदा त्वं भ्रमन्नध्वनीनः ।
पान्थास्त्वन्ये क्षणवसतयो भ्रंशमानेष्वधस्ताद्
भूमेः खण्डेष्वपि ममतया सङ्क्तुमिच्छन्ति, चित्रम् ॥

१२९ अश्वत्थामंस्त्वदीयं भ्रमणमनवधि प्रापयेच्चेत् कुरूणां
त्वामेनां युद्धभूमिं पुनरपि, चरणं सावधानं निधेहि ।
कोऽलं ज्ञातुं यदेष क्वचिदिह पतितो लोष्टकः स्यान्न वा स्याद्
" हा हा पुत्रेति शस्त्रं सपदि विजहतस्त्वद्गुरोरेव मूर्धा ॥

१३० शक्रप्रचेतःप्रभृतीनि पूर्वं नामानि सातङ्कमुदाहृतानि ।
काले लयं बुद्बुदवद् गतानि त्वया न किं द्रोणसुतेक्षितानि ॥
प्राग् यानि साडम्बरमर्चितानि तान्येव सावज्ञमथोज्झितानि ।
परःसहस्राण्यपि दैवतानि त्वयेत्थमद्यावधि लोकितानि ॥
तद् ब्रूहि, ये नूतनदेवसङ्घा नृत्यन्ति सद्यःसमयोर्मिपृष्ठे ।
संलक्षयंस्त्वं किमु मन्यसे तानजातकल्पानुत नष्टकल्पान् ॥

१३१ उदाहृतं गोष्ठिषु मानवानामाचारधर्मादिसनातत्वम् ।
जीवंश्चिरायार्थत एक एव द्रौणायनिर्लोक इहेति शृण्वन् ॥
यदट्टहास्यं कुरुते तदत्र क्वाप्यब्दविस्फूर्जितकैतवेन ।
क्वचिन् मिषाच्चाम्बुधिगर्जितानां मम श्रुतिं जातुचिदभ्युपैति ॥

---

१ प्रत्याशम् – प्रतिदिशम् ।

१३२ यत् पूर्वभूभृत्कुणपेषु संस्थितं नृपासनं तत् क्वचिदन्यभूपतेः ।
अट्टालिकाबन्ध इवाप्यवर्ततेत्ये तत् त्वया द्रोणसुतेक्षितं मुहुः ॥
दृष्ट्वोदितानस्तमितांश्च सान्वयानित्थं बहून् क्षोणिपतींस्तवाध्वसु
शून्यस्वरूपां किमु मन्यसेऽधुना गच्छद्गतागामिनृपावलीमिमाम् ॥

१३३ कृत्वा वृष्णय एकतः प्रतिकृतीः कृष्णस्य ता अर्चय-
न्त्यन्धास्ते तु मदात् पुरःस्थितममुं नालोकयन्त्यन्यतः ।
भङ्क्तुं स्वप्रतिमास्तदुद्यतकरो वार्ष्णेय एवेहते
नीरोत्कीर्णमिवात्मनश्च चरितं सर्वं गतं मन्यते ॥

१३४ खद्योतावलिभूषितस्तरुरिव प्रावृण्मुखेऽभूत् पुरा
कान्ताविभ्रमदर्शनात् प्रतिपदं यन् नैषधस्यान्तरम् ।
तद् व्याप्तं [1]वरटाकुलैरिव वधूं त्यक्त्वा वने गच्छतो
"हा हा ! नैव नलोऽनलोऽयमधुना साक्षादिति क्रन्दति ॥

१३५ छायां स्वामपि वीक्ष्य भित्तिषु पुरा याशिश्रियन् मातरं
दृष्ट्वैनां पतिपार्श्वगामथ यमभ्रान्त्याभवद् याकुला ।
सैवास्पन्दविलोचनातिथिमिव प्रत्युज्जगामान्तकं
पारेबुद्धि कुतोऽर्जितं बलमिदं, सावित्रि, तच्छाधि माम् ॥

**क्षुरस्य धारा निशिता दुरत्यया ।**

१३६ उल्लङ्घ्यापरलोकदेहलिमितो यद् दृष्टवान् सत्यवान्
सत्यं वानृतमेव वा तदिति स स्वान्ते बभूवाकुलः ।
आनीतः पुनरैहिकैर्दृढतरराकृष्य पाशैर्बलाद्
ध्यायंस्तत् क्षणलक्षितं चिरमिहाप्यासिष्ट पर्युत्सुकः ॥
आसीद् देहलिरेव यान्यजगतस्तस्य क्रमित्वैष्यतः
प्रत्युल्लङ्घयतोऽन्तरं तु विदधे धारेव सासेर्द्विधा ।
अन्तश्चेतसि तामजस्रमवहत् प्राणात्ययादा क्षतिं
प्रत्यग्रामिव, [2]संप्लुतासृजमिव, प्रत्यागतोऽसौ भुवम् ॥

१३७ पश्यन्ती सहसान्धकारपटलैर्द्वावाक्षमे संवृते
निन्दन्ती बहु वेधसं जनमनःसंकल्पभङ्गस्पृहम् ।
पाणिभ्यां च निजाननं पिदधती विस्रस्तधम्मिल्लका
मूर्धानं कचपाशधारिणमसौ शुक्रात्मजाताडयत् ॥

---

१ वरटा- "गांधिलमाशी" इति भाषायाम् ।
२ संप्लुतासृज्- यथा गीतासु. २–४६
यावानर्थ उदपाने सर्वतः संप्लुतोदके ।

१३८ " देवानां हितकाम्यया रिपुकुलं त्वामद्य संप्रेषयन्
नो जाने हृदयं नु नन्दति मम क्रन्दत्यथैतन् नु वा " ।
गीर्भिर्नोक्तमपीक्षणेन कथितं यत् साश्रुणैतद् गुरोः
काव्यं विव्रजिषुर्बृहस्पतिसुतः पाथेयमित्यग्रहीत् ॥

**तदहो! ज्ञानं विलोपं गतम्!**

१३९ यत् सम्यङ्ग न गिरोद्यते, यदुदितं श्रोतुं च नेह क्षमः
कर्णः क्वापि, ततोऽस्य तत् कथयितुं यत्नोऽवहेलास्पदम् ।
आस्तामन्यजनः,– स्वयं स हि पुनः संशय्य संतिष्ठते-
साक्षात् धर्ममुखाच् छ्रुतेऽपि;–तदहो! ज्ञानं विलोपं गतम्!!
पस्त्यागतद्विजसुतेन रहस्यजातं
मर्त्येषु नीतमिति योऽध्यगमद् विषादम् ।
सोऽयं निभाल्य नचिकेतसमेवमग्रे
वैवस्वतोऽश्वसदिवान्तरपेतशङ्कः ॥

१४० द्युरोहिणो यस्य सहस्रदीधितेर्मरीचयः पूर्वमयुः सहायताम् ।
दिष्टावसाने तु स हन्त! रश्मिभिर्बद्ध्वेव तैरेव विकृष्यतेऽप्यधः॥

१४१ उदरभरणचिन्तावर्जितस्यापि राहोः
किमिति रविशशाङ्कग्रास एष प्रयासः ।
स हि निजतनुकाष्ठैः शात्रवाग्नि समिद्धं
निवहति खलु शीर्ष्णा, निःस्पृहोऽपि स्वहेतोः ॥

१४२ अश्मा कोऽपि शिवालये शिव इति प्रस्थापितोऽभ्यर्चितो
भग्नोऽसौ कृतपूजनैरपि पुनर्यैर्दूरमुत्सारितः ।
लोकेऽस्मिन् निजनिर्मितिक्षयकृतोऽप्यालोकयंस्तान् नरान्
सर्गप्रत्यवहारहेतुरहमित्यौज्झत् स्वगर्वं हरः ॥

१४३ " आकाशे गतिरस्ति मेऽतिनिपुणा," " संसर्प भूमौ शनैर् "
" जानेऽब्धेस्तरितुं जलानि," " पततां त्वं संचरस्वाध्वना" ।
" शक्तिः सञ्चरणे ममावनितले," " पातालमाशु व्रजे- "
त्येवं मत्सरिणः सुरा मनुभवान् रुन्धन्ति भाग्यच्छलात् ॥

१४४ शापान्तावधिमनुपालयत्यमुष्मिन्
यक्षेऽन्तः स्मरति निजालकां च नित्यम् ।
अस्माकं भवति हृताखिलस्वपूर्व-
ज्ञानानां मुहुरतिमत्सरीव चेतः ॥

१४५ पूर्वैर्यदुक्तं मुनिभिर्हिरण्मयं पिधानकं सत्यमुखस्य भाजनम् ।
उद्यद्धिमांशुव्यपदेशतोऽग्रतस्तदेव दृग्गोचरमभ्युपैति नः ॥
द्यावापृथिव्युत्पलयुग्मपत्रवद्
दिगन्तमार्गान् विकचीकरोति यत् ।
बिम्बं तदिन्दोस्तु तथा विनिन्दताम्-
अहो धिगस्माकमिमां कृतघ्नताम् ॥

१४६ अप्राप्यवस्तुस्पृहयालुतां वहन्
संतप्यते भूमितलेऽखिलो जनः ।
अप्युष्णरश्मेर्विदितं न किं दिवि-
[1]च्छायाप्रियत्वं, तदिहास्ति का कथा ॥

१४७ अकर्तृकं हेतुविवर्जितं च
यद् दृश्यमानं तदिहास्ति सर्वम् ।
अन्तर्विशङ्क्यापि तथा, स्वबुद्ध्या
करोमि कर्तारमहं सहेतुम् ॥

१४८ यष्ट्या स्वीयकरस्थया परिहरन्नध्वावरोधान् मुहुः
पान्थो दृग्विधुरश्चलन् निजपदन्यासानुसाराच्छनैः ।
कामप्यन्यतमां श्रयंश्च विदिशं नूनं यदृच्छावशाद्
"एकैवात्र सृतिर्न काचिदपरे"त्युच्चैरहो ! जल्पति ॥

१४९ हर्म्यं कल्पितपूर्वमेत्युटजतां, प्रासादतां चोटजं,
यातस्ते च धरातलं सममुभे; – तद् वीक्ष्य मन्यामहे ।
कालाम्भोधितटे नु नाकशिशवः स्वच्छन्दमेतच्छलात्
कुर्वन्तः परिवर्तयन्ति सिकतादुर्गाणि भञ्जन्ति च ॥

१५० अणोरणीयो महतो महीयो यदात्मतत्त्वं मुनयो वदन्ति ।
ज्ञातुं कुतोऽलं तदधीरबुद्धिर्नरः स तस्माद् विवरीतुकामम् ॥
भाण्डीरभूमीरुहबीजमन्तर्गूढातिमात्रप्रसरेन्द्रजालम् ।
किं मायिकस्यानुकरोति तस्याप्यमायि खे येन परार्धमेतत् ॥

१५१ सद्यःस्तब्धपदानिमान् विदधते कूलं पयोधेर्गतान्
उत्तुङ्गाद्रितटेषु कीलितगतीन् कुर्वन्ति कांश्चित् परान् ।
संदर्श्य क्षितिजान्तराण्यपि पुरस्तद्विक्रमान् रुन्धते
चक्रारानिव नेमयो नियतयो लोकेऽध्वगान्छासति ॥

१५२ कस्मात् किमर्थं किमु वार्थनीयं न जानतोऽपि प्रसितं ममैतत् ।
चेतोऽस्ति कस्मिन्नपि गूढहेतावबोधगम्याभिरिवार्थनाभिः ॥

---

१ "छाया सूर्यप्रिया कान्तिः ।" इत्यमरः

१५३ यच्चक्राध्वनिघर्षणादित इतस्तारा: स्फुलिङ्गा इव
भासन्ते, परमार्थत: खलु जगन्नाथस्य स स्यन्दन: ।
एते क्रीडनकोपमां प्रतिकृतिं कृत्वा रथस्याश्मिकीं
कर्षन्तोऽल्पधिय: स्वदुर्बलकरैस्तं चालितं मन्वते ॥

१५४ आसीद् यत् क्षणतोऽन्यथा तदभवद्, गत्यन्तरं नो सतो
यद् वर्त्स्यच्च तथैव यास्यति दशां सर्वं तदीदृग्विधाम् ।
एवं धावति भूतभाविभवतां वात्याप्रणुन्नाभ्रवद्
यात्रा शाश्वतिकी क्षणद्युतिनिभाप्यग्रे मनश्चक्षुष: ॥

१५५ "उत्क्षिप्तेन पदेन सार्धमिह मे मार्गोऽपि यत् पृष्ठतो
लोपं याति ततो न यामि पुरत:" "कल्पोऽत्युदारोऽस्त्ययम्"
"तिष्ठाम्यत्र निजेच्छया चिरमि"ति त्वं ब्रूहि कामं सखे,
भूस्त्वेषा च्यवते त्वदङ्घ्रितलत:, शीघ्रं त्वरस्वाग्रत: ॥

१५६ यास्यन्त्यम्बरमार्गमूर्ध्वगतय: प्राणानिला: स्वेच्छया
न्यासान् भूतगणो यथास्वमपि च प्रत्यर्पितॉंल्लप्स्यते ।
वर्तेतेह परत्र वा मम तु किं तद्व्रजमित्याकुल:
"कोऽहं कोऽहमि"तीव कोऽपि हृदये रात्रिंदिवं क्रन्दति ॥

१५७ [1]अव्यक्ततादौ निधने च मध्ये व्यक्तत्वमित्युक्तमिहास्ति जन्तो: ।
अव्यक्तताप्रायमिव स्फुटत्वं तच्चेति मां सम्यगवेक्ष्य विद्धि ॥
शुष्यज्जलानामपि संनिपातो भूत्वार्थतश्चित्रतरोऽस्मि दूरात् ।
व्यक्तत्वमीदृग्विधमेव तस्येत्यवोचदाखण्डलचापखण्ड: ॥

१५८ पश्याम्यवश्यायपटावृतं मे पश्चात् पुरस्तादभितश्च मार्गम् ।
अज्ञातसद्भूतभविष्यदर्थ: प्रालेयमात्रो न्वहमेव लोके ॥

१५९ स्पर्धन्तां विभवास्तवेह धनदश्रीभि: समं, किं तत:
पार्श्वे यौवतमस्तु नाकवनिता: प्रत्यादिशत्, किं तत: ।
आशामण्डलमस्तु मण्डितमपि त्वत्कीर्तिभि:, किं तत:
सार्थं सार्धमियात् त्वया परमितो यन्नाम तत् केवलम् ॥

१६० सूर्याचन्द्रमसौ जिघत्सति बलाच्छीर्षविशेषीकृत-
स्वर्भानो: सुरविद्विषो वदनमित्याहुर्मृषैते जना: ।
[2]आयस्यत् परमार्थत: शिर इदं मन्ये, प्रसूतेर्मनोर्
अन्वेष्टुं पदवीं भ्रमत्यनुदिशं नष्टां चिरादात्मन: ॥

---

१ अव्यक्तादीनि भूतानि...अव्यक्तनिधनान्येव...गीता २.
२ आत्मनोऽन्वेषण आयस्यन् मानवस्य शीर्षम् ।

१६१ क्रान्त्वा क्रान्त्वेह लोके कतिचन विषमान् कण्टकाकीर्णमार्गान्
ग्रावप्रायप्रदेशान् मरुभुवि च पथश्चण्डमार्तण्डदग्धान् ।
चित्रं! प्राप्तोऽध्वनोऽन्तं, दधदलघुकिणानेष काये क्षतीनां
पान्थः साचीकृतास्यः पुनरपि पदवीमीक्षते स्निग्धदृष्टया ।।

१६२ भ्रान्त्वा भ्रान्त्वा वनगिरिदरोरध्वनीनश्चिराय
पत्युर्वारां तटमुपगतोऽमन्यत स्वाध्वनोऽन्तम् ।
तस्मिन्नब्धावपि तु विधिना तत्कृते पूर्वमुप्तं
बीजं वर्त्मान्तरफलमभूद् वीचिसीतान्तरेषु ।।

१६३ आरोहन्त्यनिलांस्तुरङ्गमधिया ये स्वर्गकामा घना
भ्राम्यन्ते मरुतां गणैर्वियति ते नीत्वा हयत्वं क्षणात् ।
धावन्तोऽनुपदं वमन्ति रुधिरं नश्यन्ति चैवाचिराद्
एवं लोकदशान्तरं पिशुनयन्त्यब्दैर्नु नाकौकसः ।।

१६४ प्रत्याख्यान्ति सदप्यसद्गुणमिति प्राप्त्यै यतन्तेऽसतश्
छायाश्लेषसमीहया निजकरानस्यन्ति चेतस्ततः ।
धीगर्वं वहतां विलोक्य चरितं तादृग्विधं तन्नृणां
साशङ्कं निगदन्त्यजातनिवहा "मानुष्यकं मास्तु नः" ।।

१६५ निर्मायामृतभोजिनोऽमरगणांस्तान् सेर्ष्यमभ्यर्चयन्
सासूयं जरयापि सन्धिततनोर्भूपस्य शृण्वन् कथाः ।
प्रायो मृत्युजराभयाकुलमनाः स्वप्नेष्विवैतच्छलाद्
भीहेतोरभिभाविनं मनुभवः स्वात्मानमेवेक्षते ।।

१६६ संप्रापयन्नूर्ध्वमधश्च कांश्चिन्
नयंश्चिरोच्चावचतां च कांश्चित् ।
एकोऽपि पन्थाः शतशोऽध्वगेभ्यो
दिशो विभिन्ना दिशतीति चित्रम् ।।

१६७ न कामयेऽर्थान् न सुखोपभोगान् अभ्यर्थये केवलमेतदम्ब, ।
समुन्मिषत्तेजस ईक्षणस्य वर्तेय ते जातु कटाक्षपात्रम् ।।

## प्रार्थना

कृपया सप्तमपृष्ठे प्रथमश्लोके 'धियामलं विलिखितुं...' इत्यस्य स्थाने 'धियां विलेखितुमलं ...' इति पठ्यताम्— लेखकः ।



**बालकानां जवाहरः**

लेखकः– विघ्नहरिः देवः

मूल्यम् ६४ पणकाः

## डॉ. गजानन बाळकृष्ण पळसुले-विरचितम्
## स्वा. सा व र क र – वा ङ्म य म्

स्वातन्त्र्यवीर–सावरकराणां केषांचित् देशाभिमान-परिप्लुतानाम्, तत्त्वचिन्तनपराणाम्, आत्मचरित.विषयकाणां च काव्यानां

**सरलः, समूलः संस्कृतानुवादः ।**

## अग्निजा

मूल्यम् रू. २–५०

ऐतिहासिक-खण्डकाव्यस्य संरक्षणमन्त्रिभिः
मा. यशवन्तराव चव्हाण महोदयैः भूरि प्रशस्तस्य

**समूलः संस्कृतः अनुवादः ।**

## कमला

प्रस्तावना-- डॉ. चिन्तामणि द्वा. देशमुख

मूल्यम् : रू. ३

स्वातन्त्र्यवीर सावरकर-चरितम् ।

## विनायक-वीरगाथा

मूल्यम् ३ रू.

स्वतन्त्रं राष्ट्रैक्यबोधकं नाटचरत्नम्

## समानम् अस्तु वो मनः ।

**मूल्यम् रू. ३**

**प्राप्तिस्थानम्--'शारदा-' कार्यालयः ४२५ सदाशिव, पुणे २**

## "काव्यस्यात्मा ध्वनिरिति.... !"

अयम् आलंकारिकाणां सिद्धान्तः। अत्र इदं प्रष्टव्यम् आस्ते यत् काव्यस्य त्रिषु भेदेषु उत्तम-मध्यम-अधमाख्येषु मम्मट-मतेन, उत्तमोत्तम-उत्तम-मध्यम-अधमाख्येषु चतुर्षु भेदेषु भट्ट-जगन्नाथमतेन ध्वनेः स्थितिः कुत्र वर्तते ? एकस्मिन् एव प्रथमे भेदे मम्मटस्य उत्तमे ? जगन्नाथस्य उत्तमोत्तमे सर्वेषु भेदेषु वा ? यत्र ध्वनेः सत्ता राजते तत्सिद्धये पुष्टये वा को हेतुः ? यत्र च ध्वनिर्न विद्यते तथात्वे च किं बीजम् ?

गान्धी-चतुष्कः
मोरबी ( गुर्जर-राज्यम् )

( डॉः ) महीपतिराम दवे
नेत्ररोगतज्ज्ञः

## किं नाम वेदोत्सर्जनम् ?

सुविदितमेवैतत्सर्वेषां यच्छ्रावणे मासे शुक्ल पक्षे 'श्रावणी' नाम्ना प्रथितं कर्म प्राचीनपरंपरानुसारिणां द्विजानां गृहेषु भवति। तत्कर्माङ्गभूतं नवयज्ञोपवीतधारणमपि क्रियते तस्मिन्नेव दिने। अत्राङ्गभूतमेव कर्म प्रधानतां गतम्। यतः सामान्यतया 'श्रावणी' -शब्देन नवयज्ञोपवीत-धारणमित्येवावगम्यते। किन्तु अस्य कर्मणः यः संकल्पः प्रामुख्येन क्रियते, तत्र तु यज्ञोपवीतधारणस्य न विद्यते नामापि।

अस्मिन् कर्मणि प्रमुखे द्वे कर्मणी। तयोरेकं वेदोत्सर्जनाख्यम्। एतत्कर्म प्राचीनकालेऽपि प्रथितमासीत् इति ज्ञायते अस्य मनुस्मृतावपि चतुर्थाध्याये ९४ तः ९६ श्लोकेषु स्पष्टम् एवोल्लिखितत्वात्। अस्य संकल्पे ये शब्दा वर्तन्ते ते सर्वैः पुरोहितैरद्याप्युच्चार्यन्ते। यदर्थमेतद्वेदो-त्सर्जनाख्यं कर्म क्रियते स हेतुः संकल्पे ग्रथित एव। 'अधीतानां छन्दसाम् अस्थानोच्छ्वासादिजनितयातयामतानिरासः' स हेतुः। सुष्ठु ज्ञायते एभिः शब्दैर्यत्पूर्वे ऋषयः वेदेष्वपि यातयामता आयाति इति मन्यन्ते स्म। तस्या यातयामताया निरासार्थमेवैतत्कर्म तैः निश्चितम्। इति।

'यातयामता' शब्दो यद्यपि ऋक्संहितायां न दृश्यते तथापि वेदान्तरेषु विद्यत एव। यातयामता निःसारता इति अनर्थान्तरं तत्र एषा वेदेषु कथमायाति तदपि स्पष्टीकृतं संकल्पकृद्भिर्विद्वद्भिः। संकल्प-शब्देभ्य एव ज्ञायते यद् यातयामतायाः कारणेषु यन्मुख्यं कारणं सोऽस्ति अस्थानोच्छ्वासः। को नाम एष उच्छ्वासः ?कथं स दीयते अस्थाने ? कथं वा तेन वेदेषु ईदृशी इयती वा निःसारता आगच्छति यस्या निरा-सार्थं कर्मैतदावश्यकं बभूव ? इत्येते प्रश्नाः सहजतयैव प्रादुर्भवन्ति सामान्यजनानां मनसि। विज्ञैः सर्वम् एतत्प्राकाश्यं नेयमित्यभ्यर्थना।

'मुद्रिका' मित्रमण्डलम्
मुम्बापुरी

दिवेकरोपाह्वस्य रामचन्द्रसुतस्य हरेः

शारदा- (पुण्यपत्तनम् २.) ८ : १९-२० ★ रजि. क्र. एम्. एच्. ५५७
० लायसेन्स क्र. १३७ टु पोस्ट विदौट प्रीपेमेण्ट.



संपादकः मुद्रकः प्रकाशकः स्वामी — वसन्त अनन्त गाडगीळ
मुद्रणस्थलम्— यशवन्त मुद्रणालयः, १८३५ सदाशिव, पुण्यपत्तनम् २.
प्रकाशनस्थलम्-१.- म.म. प्रा.द.वा.पोतदार, ४९८ शनिवार, पुण्यपत्तनम् २.
२.— श्री. ल.म. चक्रदेव, ३१८ राममोहनमार्गः मुम्बापुरी ४,
कार्यालयः— [illegible] ... सदाशिव पुण्यपत्तनम् २.